कात्यायन श्रौतसूत्र

प्रथमोऽध्यायः

अथातोऽधिकारः १ फलयुक्तानि कर्माणि २ सर्वेषामविशेषात् ३ मनुष्याणां वाऽरम्भसामर्थ्यात् ४ अङ्गहीनाऽश्रोत्रियषण्ढशूद्र वर्जम् ५ ब्राह्मणराजन्यवैश्यानां श्रुतेः ६ स्त्री चाऽविशेषात् ७ दर्शनाच्च ८ रथकारस्याऽधाने ९ नियतं च १० नाऽभावादिति वात्स्यः ११ निषा-दस्थपतिर्गावेधुकेऽधिकृतः १२ वाऽवकीर्णिनो गर्दभेज्या १३ लौकिके १४ भूमौ पशुपुरोडाशश्रपणम् १५ अप्स्ववदानहोमः १६ शिश्नात्प्राशि-त्राऽवदानम् १७ वैतानिकेषु सर्वं सर्वार्थत्वात् १८ दर्शनाच्च १९ नौपासनश्रुतेः २० अधिश्रयणीये मांसप्रतिषेधः २१ १ 1.1

यज्ञं व्याख्यास्यामः १ द्र व्यं देवता त्यागः २ तदङ्गमितरत् समभिव्याहारप्रकरणाभ्याम् ३ यजतयश्चाऽफलयुक्तास्तदङ्गम् ४ यजतिजुहोतीनां को विशेषः ५ तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः ६ उपविष्टहोमा स्वाहाकारप्रदाना जुहोतयः ७ ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोः ८ दर्शनाच्च ९ फलयुक्तानामारम्भे याथाकामी फलार्थित्वात् १० न नियमनिमित्ताऽग्निहोत्रदर्शपूर्णमासदाक्षायणाऽग्रयणपशुषु प्रवृत्तेः ११ सोमे चैके १२ चातुर्मास्येषु चतुर्मुखश्रुतेः १३ नियतसहपाठात् १४ दर्शनाच्च १५ नात्सर्गयोगात् १६ स्यात् त्रिंशद्वत् १७ विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात् १८ प्रायश्चित्तविधानाच्च १९ तथा च दृष्टम् २० न श्रुतिलक्षणत्वात् २१ प्रायश्चित्तं तत्कालम् २२ दृष्टे तत्परिमाणम् २३ २ 1.2

ऋचो यजूंषि सामानि निगदा मन्त्राः १ तेषां वाक्यं निराकाङ्क्षम् २ मिथः सम्बद्धम् ३ तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात् ४ मन्त्रान्तैः कर्मादिः सान्निपात्योऽभिधानात् ५ अनियमं वात्स्यः ६ आदिं त्वाचार्याः ७ त आद्युक्ताः ८ परादिना पूर्वान्तः ९ उपांशु प्रयोगः श्रुतेः १० न सम्प्रैषाः ११ कौशं बर्हिः १२ अर्थात्परिमाणम् १३ अयुग्धातूनि यूनानि १४ प्रागग्रे यून उदगग्रं बर्हिराचिनोति १५ उदगग्रे प्रागग्रमिध्मम् १६ प्रत्यग्ग्रन्थीनवगूहति १७ अष्टादशेध्मं परिधिवृक्षाणाम् १८ एकविंशतिं वा १९ ततः परिधीनेके २० अपरिमितं प्रणयनीयं त्रियूनम् २१ निरूप्याऽज्यं वेदोऽसीति यजमानो वेदं करोति २२ कुशमुष्टिं सव्यावृत्तं वत्सजानुं त्रिवृतं मूतकार्यं वा २३ पशुब्रह्मवर्चसाऽन्नाद्यकामा यथासंख्यम् २४ आऽमुष्मादिति कर्मसु तच्च २५ अन्तवचने च २६ प्रतिकर्मोद्धरण-मप्रसङ्गे २७ अपवृत्तकर्मा लौकिकोऽर्थसंयोगात् २८ अप्रकरणोत्पत्तिरना-रभ्यवाद आश्रयित्वात्सर्वगुणः २९ प्रकरणे चाऽविशेषात्

३० दर्शनाच्च ३१ वैकङ्कतानि पात्राणि ३२ खादिरः स्रुवः ३३ स्फ्यश्च ३४ पालाशी जुहूः ३५ आश्वत्थ्युपभृत् ३६ वारणान्यहोमसंयुक्तानि ३७ बाहुमात्र! यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डा भवन्ति ३८ अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः ३९ स्पयोऽस्याकृतिरादर्शाकृति प्राशित्रहरणं चमसाकृति वा ४० चात्वालोत्करावन्तरेण सञ्चरः ४१ प्रणीतोत्कराविष्टिषु ४२ ३ 1.3

चोदिताऽभावेऽनारम्भस्तत्सिद्धित्वात्तस्य १ नियते सामान्यतः प्रतिनिधिः स्यात् २ आरम्भान्नियमः ३ दोषश्चाऽसमाप्तौ स्यात्सामान्यात् ४ दर्शनाच्च ५ अन्यार्थं दर्शनं न पुनर्ग्रहणात् ६ अन्यार्थं पुनर्ग्रहणम् ७ व्रते प्रसङ्गो न नियमशब्दात् ८ शब्देऽविप्रतिपत्तिः ९ सोमेन जात्यभावात् १० आज्ये चाऽदर्शनात् ११ पशौ मन्त्रवर्णात् १२ श्रुतेश्च विकल्पे प्रवृत्तं कर्मान्तरत्वात् १४ प्रतिनिधौ तत्कालात् १५ अर्थद्र व्यविरोधेऽर्थसामान्यं तत्परत्वात् १६ गुणद्रव्ययोर्द्रव्यं प्रधानयोगात् १७ न समत्वात् १८ गुणाऽनुग्रहात् १९ ४ 1.4

कर्मणामानुपूर्व्यं न युगपद्भावात् १ अर्थनिर्वृत्तेश्च २ स्याद्वाऽनुपूर्व्यनियमः श्रुत्यर्थक्रमेभ्यः ३ प्राकृतं च विकृतौ ४ विरोधेऽर्थस्तत्तत्परत्वात् ५ श्रुतिः क्रमादानुमानिकत्वात् ६ मन्त्रचोदनयोर्मन्त्रबलं प्रयोगित्वात् ७ न समत्वात् ८ गुणानां तु भूयस्त्वात् ९ तुल्यसमवाये सामान्यपूर्वमा-नुपूर्व्ययोगात् १० नैककर्मणि संबन्धात् ११ ग्रहणसादनाऽवदानप्रदानेषु तु वचनात् १२ न द्र व्यभेदे गुणयोगादिति वात्स्यः १३ प्रवृत्ते नियतं दोषविशेषात् १४ षोडशिनि त्वानुपूर्व्यभूयस्त्वात् १५ अनियमः फलसंयुक्तेषु १६ क्रमो विध्यर्थः कर्मण्यसंभवात् १७ ५ 1.5

अवत्तनाशेऽन्यद् गुणाऽनुग्रहात् १ न पूर्वशेषात् २ अचोदितत्वाच्च ३ स्विष्टकृद्वदानुपूर्व्ययोगात् ४ गुणहानौ तु शेषभावात् ५ न देवता-ऽग्निशब्दक्रियाः परार्थत्वात् ६ कामं देवताम् ७ प्रतिषिद्धं प्रत्यवायात् ८ स्वामी फलयोगात् ९ गुणेषु प्रतिनिधिः परार्थत्वात् १० सत्रेषु तु श्रुतेः ११ स तद्धर्मा कर्मयोगात् १२ सत्राणि ब्राह्मणानामृत्विक्श्रुतेः १३ एककल्पानामवैगुण्यात् १४ न परार्थत्वात् १५ वैश्यराजन्ययोर्गार्हपते १६ सहस्रसंवत्सरममनुप्याणामसम्भवात् १७ स्याद्देहाऽनित्यत्वात् १८ तस्य कार्यत्वात् १९ नाऽसंभवात् २० शास्त्रसंभवादिति भारद्वागः २१ नाऽदर्शनात् २२ कुलसत्रमिति कार्ष्णाजिनिः २३ साम्युत्थानमिति लौगाक्षिः २४ अह्नां वाऽशक्यत्वात् २५ श्रुतिसामर्थ्यात् २६ प्रकृत्यनुग्रहाच्च २७ ६ 1.6

कर्मणां युगपद्भावस्तन्त्रम् १ शक्यपुरुषार्थकृतत्वैकार्थसमवायश्रुतिभ्यः २ फलकर्मदेशकालद्र व्यदेवतागुणसामान्ये ३ तद्भेदे भेदः ४ देशकालौ विरोधे न कृत्स्नोपदेशात् ५ अहर्गणे सुब्रह्मण्यायाः सर्वोपलक्षणं प्रकृतिवत् ६ तन्त्र काल कर्म प्रत्यहमविधानात् ७ एकद्र व्ये कर्माऽवृत्तौ सकृन्मन्त्र-वचनं कृतत्वात् ८ न ग्रहणलवनस्तरनाऽज्यग्रहणेषु तु ९ वचनादाज्ये १० मुष्टौ चोत्तमे ११ स्वप्ननदीतरणाऽववर्षणाऽमेध्यदर्शनप्रयाणेषु तु सकृत् कालद्र व्यैकार्थत्वात् १२ न निमित्तभेदात् १३ अप्रधानकालं सकृदसन्निपातात् १४ यूपः १५ स्वरुश्च संस्थावचनात् १६ तन्निर्वृत्तेश्च १७ कर्मणि पुरुषाणाम् १८ प्रधानं स्वामी फलयोगात् १९ पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यात् २० वचनादन्यत् २१ शेषमितरे यथाऽख्यम् २२ उपवीतिनः २३ प्राञ्च्युदञ्चि वा २४ आवृत्तिसामन्तेषु प्रदक्षिणम् २५ विपर्यस्य पित्र्! येषु तु सकृद्दक्षिणा च २६ प्रधानद्र व्यत्वाऽपत्तौ साङ्गाऽवृत्तिस्तदादेशात् २७ ७ 1.7

गुणानामेकार्थानां सर्वारम्भश्चोदितत्वात् १ न कृतत्वात् २ अनारभ्यत्वात् ३ दर्शनाच्च ४ श्रुत्यानर्थक्यमिति चेत् ५ कालान्तरेऽर्थवत्वं स्यात् ६ धर्ममात्रेषु समुच्चयोऽविरोधे ७ होत्राधानयोः ८ न याज्याऽनुवाक्यासु विरोधात् ९ दर्शनाच्च १० प्रायश्चित्तेषु दोषनाशात् ११ अनाऽश्रुतेः १२ प्रत्यक्षाच्च १३ स्याद्वा दर्शनात् १४ नाऽन्यार्थत्वात् १५ मन्त्रे स्वरक्रिया यथाऽम्नातमविशेषात् १६ भाषिकस्वरो वोपपन्नमन्त्रोपदेशात् १७ तानो वा नित्यत्वात् १८ एकश्रुति दूरात्संबुद्धौ यज्ञकर्मणि सुब्रह्मण्यासाम-जपन्यूङ्खयाजमानवर्जम् १९ सङ्ख्याविकल्पो दानसंयोगे कृतत्वात् २० ऊवध्यवसाऽध्यूध्नीवनिष्ठसमुच्चयो द्र व्यसंस्कारतद्भेदाभ्याम् २१ चोदनागुणेषु च प्रक्लृप्त्युपबन्धाभ्याम् २२ गार्हपत्याऽहवनीयौ न व्यवेयात् २३ विवृत्याऽवृत्य वेतरथा वृत्तिः २४ अतीत्य निष्क्रमणम् २५ उत्तरत उपचारो यज्ञः २६ दक्षिणतो ब्रह्मयजमानयोरासने २७ पश्चाद्यजमानो वेदिस्पृक् २८ अध्वर्युः कर्मसु वेदयोगात् २९ वचनविरोधाभ्यामन्यः ३० हविष्पात्रस्वाम्यृत्विजां पूर्वं पूर्वमन्तरम् ३१ ऋत्विजां च यथापूर्वम् ३२ न वाऽचोदितत्वात् ३३ गार्हपत्ये संस्काराः ३४ श्रपणं वाऽहवनीये ३५ घृतमाज्ये लिङ्गात् ३६ तस्य होमोऽनादेशे ३७ चात्वालात्पुरीषम् ३८ आहवनीययजतयो ध्रुवायाः ३९ इडाप्राशित्राऽघारांश्चैके ४० प्राञ्चा-वाघारौ ४१ विदिशावेके ४२ आहवनीये होमाः । श्रुतिसमाख्या-नाभ्याम् ४३ जुह्वाऽवचने ४४ सकृद्गृहीताऽर्थावाप्तेः ४५ अवषट्कारा-ऽतिरेकाच्च ४६ ८ 1.8

व्रीहीन्यवान्वा हविषि १ तस्य द्विदरवद्यति २ त्रिर्जमदग्नीनाम् ३ पश्चात्तृतीयम् ४ सर्वेषां वोभयविधानात् ५ मध्यात्पूर्वार्द्धाच्चऽसम्मिन्द-न्नङ्गुष्ठपर्वमात्रमवदानम् ६ मात्रावद्दधिपयसोः ७ आद्यन्तयोराज्यम् ८ एकप्रत्यवायं स्विष्टकृतः ९ द्विश्चाऽभिघारणम् १० अवदाय प्रत्यभिघारणं प्राक् स्विष्टकृतः ११ सर्वहुत एककपालः १२ अनुवाचनप्रैषो यथादैवतममुष्मा अनुब्रूहीति १३ आश्राव्यप्रैषे च १४ अमुं यज इति १५ प्रैषाऽनुवाचने षष्ठी वपायै धानासोमेभ्य इति परिहाप्य १६ असावित्यपनोदे १७ सवषट्कारासु तिष्ठन्दक्षिणत उदङ्प्राङ् वषट्कृते १८ उभयत आज्यं हविषः २० सह वा २१ ९ 1.9

वर्तमानाऽपदेशाच्चोदनाशब्दाच्छ्रुत्यर्थाऽभावात्तवै चेति वचनान्निर्देशात्कर्मचोदकः १ मन्त्रो वा समभिव्याहारात् २ अर्थप्रसङ्ख्यया द्र व्यो-पकल्पनम् ३ चर्माण्युत्तरलोमानि प्राग्ग्रीवाणि ४ अवरोक्तमुत्तरं हविषि ५ एकद्र व्ये साऽज्ये वेदेनोपग्रहणम् ६ स्फ्येनाऽन्यत्र ७ कुशैरसत्सु ८ पाणिभ्यां जुहूं परिगृह्योपभृत्याधानमादानकालेऽसंह्लादयन् ९ वाच्यफलेषु स्वर्गः सामर्थ्यात् १० एककर्मणि गुणविशेषे फलविशेषः ११ दान-वाचनाऽन्वारम्भणवरवरणव्रतप्रमाणेषु यजमानं प्रतीयात् १२ खातलूनछि-न्नाऽवहतपिष्टदुग्धदग्धेषु यजुष्क्रियाऽसम्भवात् १३ रौद्रं राक्षसमासुरमा-भिचरणिकं मन्त्रमुक्त्वा पित्र्! यमात्मानं चाऽलभ्योपस्पृशेदप उपस्पृशेदपः १४ १० 1.10

इति कातीये श्रौतसूत्रे प्रथमोऽध्यायः

**दर्शपूर्णमासेष्टिः**

पूर्वां पौर्णमासीमुत्तरां वोपवसेत् १ अग्न्यन्वाधानमध्वर्युर्यजमानो वा २ ममाग्ने---पृतना जयेमेत्याहवनीये समिधमादधाति ३ तूष्णीं द्वितीयाम् ४ एवमितरयोः ५ महाव्याहृतिभिर्वा प्राक्संस्थम् ६ तूष्णीं वा यथापूर्वम् ७ अहनि मांसमैथुने वर्जयेत् ८ केशश्मश्रु वपते वाऽशिखम् ९ अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषाऽसुहितौ १० अन्तरेणाऽपराग्नी गत्वा परेणा-ऽहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमिति वा ११ सत्यवाद्यतः १२ कर्माऽङ्गमुत्तरे सत्यवदनम् १३ वृक्षाऽरण्यौषधीनामश्नीयाद्वा १४ आहवनीयगृहशाय्यधो गार्हपत्यस्य वा १५ सद्यो वा प्रातः १६ अग्निहोत्रं हुत्वा ब्रह्माणं ब्रह्मिष्ठं भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति १७ वृतो जपति अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवस्स्वर्देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्र्! यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणाम् इति १८ वाचस्पते यज्ञं गोपायेत्याह १९ अपरेण वाऽहवनीयं दक्षिणाऽतिक्रामति २० अहे दैधिषव्योदतस्तिष्ठाऽन्यस्य सदने सीद योऽस्मात्पाकतर इति ब्रह्मसदनमीक्षते २१ ब्रह्मसदनात्तृणं निरस्यति निरस्तः पाप्मा सह तेन द्विष्म इति २२ १ 2.1

इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्या इति ब्रह्मसदन आहवनीयाऽभिमुख उपविशति १ वाग्यत आऽनुयाजप्रसवात् २ भागपरिहरणादि वा ३ आवृताऽवषट्का-रासु ४ अत्र वा व्रतोपायनम् ५ व्याहृत्य वैष्णवं मन्त्रं जपेत् ६ अध्वर्युश्च ७ प्रणय यज्ञं देवता वर्द्धय त्वं नाकस्य पृष्ठे यजमानोऽस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यजमानं धेहि ॐ प्रणय इति प्रणीताः प्रसौति ८ एवमामन्त्रित ओङ्कारेण प्रोक्ष यज्ञमिति हविषीध्माबर्हिषोश्च ९ बृहस्पते परिगृहाण वेदिं सुगावो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथतां साध्वन्तर्हिंस्रां पृथिवी देवी देव्यस्तु इति वेदिं परिगृह्णन्तम् १० प्रजापतेऽनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम् ११ देवता वर्द्धय त्वमिति सर्वत्राऽनुषजति १२ मित्रस्य त्वा चक्षुषा प्रतीक्षेति प्राशित्रं प्रतीक्षते १३ देवस्य त्वेति प्रतिगृह्णाति १४ पथिव्यास्त्वेति सादयाति उपोह्य बर्हींषि १५ पुनरादाय देवस्य त्वेत्यनामिकाऽङ्गुष्ठाभ्यामग्नेष्ट्वेति प्राश्नाति दन्तैर-नुपस्पृशन्नत्र चेत् १६ निदधाति वांऽसदेशे १७ प्रक्षाल्य पात्रं नाभिमालभते या अप्स्वन्तर्देवतास्ता इदं शमयन्तु स्वाहाकृतं जठरमिन्द्र स्य गच्छ घसिना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्र स्य त्वा जठरे सादयामि इति १८ एतं त इति समिदामन्त्रितः प्रसौति १९ प्रतिष्ठेति

ब्रुयाद्वा २० कर्माऽपवर्गे समिधमादधाति जुहोत्युपतिष्ठते वा नमः कृताय कर्मणे अकृताय कर्मणे नमः । अयाड यज्ञं जातवेदा अन्तरः पूर्वोऽस्मिन्निषद्य सन्वं सनिं सुविमुचा विमुञ्च धेह्यस्मभ्यं द्र विणं जातवेदः स्वाहा इति यथेतमेत्य । एतदब्रह्मत्वमिष्टिपश्वोः २२ २ 2.2

गार्हपत्यमुत्तरेणोदपात्रं निधायाऽलभते भूतस्त्वा भत करिष्यामीति १ ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेत्याह २ अनुज्ञान उत्तरेणाऽहवनीयं सम्प्रति निदधाति कस्त्वेति ३ कांस्यवानस्पत्यमार्तिकैरभिचारब्रह्मवर्च-सप्रतिष्ठाकामा यथासङ्ख्यम् ५ तृणैरग्नीन्परिस्तीर्य पुरस्तात्प्रथमं द्विशः पात्राणि संसादयति ६ यजमानो वा ७ शूर्पाऽग्निहोत्रहवणि स्फ्यकपालं शम्याकृष्णाजिनमुलूखलमुसलं दृषदुपलमर्थवच्च ८ श्रपणस्य पश्चादुत्तरतो वा ९ कर्मणे वाम् इति शूर्पाऽग्निहोत्रहवण्यादाय वाचं यच्छति १० प्रतपनं प्रत्युष्टं निष्टप्तमिति वा ११ गच्छत्युर्वन्तरिक्षमिति श्रपणस्य पश्चादनस्तिष्ठत्समङ्गि १२ धूरसीति धूरभिमर्शनम् १३ देवानामि-त्युपस्तम्भनस्य पश्चादीषाम् १४ विष्णुस्त्वेत्यारोहणम् १५ प्रेक्षत उरु वातायेति हविष्यान् १६ अपहतमिति निरस्यत्यन्यत् १७ अविद्य-मानेऽभिमृशेत् १८ यच्छन्तामित्यालभते १९ देवस्य त्वेति गृह्णात्याग्नेयं चतुरो मुष्टीन् २० एवमग्नीषोमीयम् २१ यथादेवतमन्यत् २२ भूताय त्वा इति शेषाऽभिमर्शनम् २३ स्वरिति प्राङीक्षते २४ दृंहन्तामित्यवरोहति २५ गच्छत्युर्वन्तरिक्षम् इति २६ श्रपणस्य पश्चात्सादयति पृथिव्यास्त्वेति २७ पात्र्! यां वा स्फ्योपहितायाम् २८ धूरीषाऽरोहणानि पात्रीबिले जपति २९ दृंहन्तामित्युत्थानम् ३० कुशौ समावप्रशीर्णाऽग्रावनन्तर्गर्भौ कुशै-श्छिनत्ति पवित्रे स्थ इति ३०-१ त्रीन्वा ३१ हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति ३२ ता स्थानं तयोः ३३ सव्ये कृत्वा दक्षिणेनोदिङ्गयति ३४ प्रोक्षिता स्थ इति तासां प्रोक्षणम् ३५ हविश्चाऽग्नये त्वाऽग्नीषोमाय त्वेति ३६ यथादेवतमन्यत् ३७ पात्राणि दैव्यायेति ३८ असञ्चरे प्रोक्षणीर्निधाय ३९ ३ 2.3

शर्माऽसीति कृष्णाजिनमादत्ते १ अपेत्य पात्रेभ्योऽवधूनोति २ प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगिति ३ सव्याऽशून्ये निदधात्युलूखल-मद्रि रसि ग्रावाऽसीति वा ४ प्रति त्वेत्युभयोः ५ हविराज्पत्यग्नेस्तनूरसीति ६ वाचं विसृजते ७ यजमानश्च ८ हविष्कृता वा ९ नानाबीजेष्वन्त्ये सामर्थ्यात् १० बृहद्ग्रावेति मुसलमादत्ते ११ स इदमित्यवदधाति १२ हविष्कृदेहीति त्रिराह्वयति १३ अतः पत्न्यवहन्ति अन्यो वा १४ आह्वयत्याहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति त्रिः शम्यया द्विर्दृषदं सकृदुपलाम् १५ वर्षवृद्धमसीति शूर्पमादत्ते १६ प्रतित्वेति हविरुद्वपति १७ परापूतमिति निष्पुनाति १८

अपहतमिति तुषान्निरस्यति १९ वायुर्व इति अपविनक्ति २० देवो व इति पात्र्! यामोप्याऽभिमन्त्रयते २१ त्रिः फलीकरोति देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमित्येके २२ फलीकृत्य कणान्निदधाति २३ पेषणोपधाने युगपत् २४ धृष्टिरसीति उपवेषमादायाऽपाग्ने इति अङ्गारान्प्राचः करोति २५ आ देवयजमित्यङ्गारमाहृत्य कपालेनाऽवच्छा-दयति ध्रुवमसीति २६ अमुष्येति द्विषच्छद्वेऽभिचरन् २७ अन्यत्राऽपि २८ सव्याऽङ्गुल्याऽशून्येऽङ्गारं निदधात्यग्ने ब्रह्मेति २९ धरुणमिति पश्चात् ३० पुरस्ताद्धर्त्रमिति ३१ विश्वाभ्य इति दक्षिणतः ३२ समं विभज्य द्वे दक्षिणतः एवमुत्तरतश्चितस्थ इति ३३ तूष्णीं वा ३४ एवमेकादशाऽग्नीषोमीयस्य ३५ अधिकं दक्षिणतः ३६ भृगूणामित्यङ्गारैरभ्यूहति ३७ ४ 2.4

उपसर्जनीर धिश्रयति १ कृष्णाजिनमादत्ते २ तस्मिन्दृषदं धिषणाऽसीति ३ पश्चाच्छम्यामुपोहत्युदीचीं दिव इति ४ दृषद्युपलां धिषणाऽसीति ५ धान्यमसीति तण्डुलानोप्य पिनष्टि प्राणाय त्वेति प्रतिमन्त्रम् ६ दीर्घामिति प्रोहति ७ चक्षुषे त्वेतीक्षते ८ पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम् ९ पात्र्! यां सपवित्रायां पिष्टान्यावपति देवस्य त्वेति १० श्रपणस्य पश्चा-दुपविशत्यन्तर्वेदि वा ११ उपसर्जनीरानयत्यन्यः १२ पवित्राभ्यां प्रति-गृह्णाति समाप इति १३ संयौति जनयत्यै त्वेति १४ समं विभज्या-ऽसंहरिष्यन्नालभत इदमग्नेरिदमग्नीषोमयोरिति १५ यथादेवतमन्यत् १६ इषे त्वेत्याज्यमधिश्रयत्यन्यः १७ अपत्नीकस्याऽहवनीये तच्छ्रापिणः १८ घर्मोऽसीति पुरोडाशौ युगपत् १९ उरु प्रथा इति प्रथयति याव-त्कपालमनतिपृथुम् २० अग्निष्ट इत्यद्भिर्मृशति सकृत् त्रिर्वा २१ पर्यग्निकरोति अन्तरितं रक्षोऽन्तरिता अरातय इति सहाऽज्यम् २२ देवस्त्वेति श्रपणम् २३ मा भेरित्यालभते २४ अतमेरुरिति शृताव-भिवासयति भस्मना वेदेनोपवेषेण वा २५ पात्र्! यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयति अभितप्य प्रत्यगसंस्यन्दमानं त्रिताय त्वेति प्रतिमन्त्रम् २६ अन्वाहार्यं दक्षिणाग्नावधिश्रयति २७ अत्र वा व्रतोपायनम् २८ ५ 2.5

अपरेणाऽहवनीयं वेदिं खनति त्र्! यङ्गुलखातां व्याममात्रीं पश्चात् त्र्! यरत्निं प्राचीमपरिमितां वा प्राक्प्रवणामुदग्वा मध्यमसङ्गृहीतामभितॐऽसौ १ आमूलोच्छेदनादोषधीनाम् २ ओषधीनां मूलान्युच्छेत्तवै ब्रूयात् ३ आहा-र्यपुरीषां पशुकामस्य ४ वेदिं परिसमूह्य वितृतीयेऽग्नीदुत्तरत उत्करं करोति ५ देवस्य त्वेति स्फ्यमादाय सतृणं सव्ये कृत्वा दक्षिणेनाऽलभ्य यपति इन्द्र स्य बाहुरिति ६ नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तम्बयजुर्हरिष्यन् ७ वेद्यां तृणं निदधात्युदक् पृथिव्यै वर्माऽसीति ८ पृथिवि देवयजनीति तृणेऽन्तर्हिते प्रहरति ९ व्रजं गच्छेति पुरीषमादत्ते । वर्षतु त इति वेदिं प्रेक्षते ।

बधानेत्युत्करे करोति । प्रहरणशेषो वाऽविशेषोपदेशात् १३ अपाररुमिति द्वितीयं प्रहरणादि १४ अभिन्यस्यत्यग्नीदुत्करमररो दिवमिति १५ द्र प्सस्ते इति तृतीयम् १६ तूष्णीं चतुर्थं सतृणम् १७ पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रतिमन्त्रम् १८ वेद्यां त्रिरुल्लिख्याऽह हर त्रिरिति १९ हृत्वाऽग्नील्लेखाः संमृशति २० पितृयज्ञाऽग्निचित्ययोर्वा तत्र दर्शनात् २१ अत्र वेदिकरणं यथोक्तम् २२ उत्तरं परिग्रहं परिगृह्णाति । सूक्ष्मास्योनोर्जस्वतीति प्रतिमन्त्रम् २३ पुरा क्रूरस्येत्यनुमार्ष्टि २४ अध्यधिवेदि प्रोक्षणीर्धारयति २५ अन्योऽथ स्फ्यमुद्यम्याह प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः सम्मृड्ढि पत्नीं सन्नह्याऽज्येनोदेहीति यदीच्छेत् २६ यथाप्रेषितमन्यः २७ स्वयं वा-ऽविरोधात् २८ सम्प्रषावचनाच्च २९ प्राक् स्तरणाद्वेदिं नाऽवमृशेत् ३० शृतानि च हवींष्याप्रचरणात् ३१ अङ्गुष्ठाऽङ्गुलिभ्यां मांससहिताभ्या-मवद्यन्त्येके ३२ आपन्नं स्तृणन् निरस्येत् ३३ द्विषतो वध इति स्फ्यमुदञ्चं प्रहरति ३४ अवनिज्य पाणी अपरेण प्रणीता स्फ्यं निदधाति ३५ इध्मा बर्हिश्च ३६ पूर्वमिध्मम् ३७ प्रणीता दक्षिणत वाऽहृत्य ३८ स्रुवं प्रतप्य पूर्ववद्वेदाग्रैरन्तरतः प्राक्सम्मार्ष्टि अनिशित इति विपर्यस्य बर्हिर्मूलैः प्राङ्गुत्क्रम्य ३९ प्रतप्य प्रतप्य प्रयच्छति ४० अनिशितेति स्रुचः ४१ तूष्णीं प्राशित्रहरणं शृताऽवदानं पात्री च ४२ सम्मार्जनान्यपास्यति ४३ आहवनीये प्रासनमेके ४४ ६ 2.6

पत्नीं सन्नह्यति प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्यधीवासोऽदित्यै रास्नेति १ दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्प इति २ न ग्रन्थिं करोति ३ ऊर्जे त्वेत्याज्यमुद्वास्य पत्नी-मवेक्षयति अदब्धेनेति ४ वेद्यां करोत्यपरं प्रोक्षणीभ्यः ५ आहवनीये वा कृत्वा तच्छ्रापिणः ६ सवितुस्त्वेत्याज्यमुत्पुनाति प्रोक्षणीश्च पूर्ववत् ७ आज्यमवेक्षते तेजोऽसीति यजमानो वा ८ स्रुवेणाऽज्यग्रहणं चतुर्जुह्वां धाम नामेति सकृन्मन्त्रः ९ अष्टावुपभृत्यल्पीयोऽनुयाजाश्चेत् १० चतुरन्यत्र प्रतिविभागात् ११ पश्वातिथ्याऽदर्शनाच्च १२ न कृत्स्नोपदेशात् १३ पश्वातिथ्ययोर्वचनात् १४ ध्रुवायां च जुहूवत् १५ इध्मं प्रोक्षति विस्रंस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्तादग्रन्थिं कृष्णोऽसीति प्रतिमन्त्रम् १६ शेषं मुलेषूपसिञ्चत्यदित्यै व्युन्दनमिति १७ पवित्रे निधाय प्रणीतासु बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति १८ ब्रह्मणे प्रदाय सन्नहनं विस्रंस्य दक्षिणस्यां वेदिश्रोणौ निधायाऽन्यैरवच्छाद्य वेदिं स्तृणात्यू-र्णम्रदसमिति त्रिवृत् १९ उपपत्या वा बहुलम् २० अधरमूलम् २१ पश्चादपवर्गम् २२ प्रबृहं वा २३ अत्रोद्वासनमाहवनीयश्रापिणः २४ इध्मात्समिधमादायाऽहवनीयं कल्पयत्युपर्युपरि प्रस्तरं धारयन् २५ उल्मुके उदूहत्यनुयाजाश्चेत् २५ ७ 2.7

परिधीन्परिदधात्यार्द्रानेकवृक्षीयान् बाहुमात्रान् पालाशवैकङ्कतकार्ष्मर्यबैल्वान्पूर्वालाभ उत्तरान् खादिरौदुम्बरान्वा मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रम् १ प्रथमं परिधिं समिधोपस्पृश्य वीतिहोत्रमित्यादधाति २ अनुपस्पृश्य द्वितीयां समिदसीति ३ सूर्यस्त्वेति जपति आहवनीयमीक्षमाणस्तद्वचनत्वात् ४ आवृत्य वेदिं बर्हिषस्तृणे तिरश्ची निदधाति सवितुरिति ५ अन्ये वाऽयुक्तत्वात् ६ अन्यत्राऽपि गृणार्थे ७ यूपाञ्जने च सर्पिः ८ पुरोडाशपयस्याधानासु चेच्छन् ९ तयोः प्रस्तरं स्तृणात्यूर्णम्रदसमिति १० अभिनिदधात्या त्वा वसव इति ११ सव्याऽशून्ये जुहूं प्रतिगृह्य निदधाति घृताचीति १२ एवमितरे उत्तराभ्यां प्रतिमन्त्रं बर्हिष्युपभृतं ध्रुवां चाऽवकृष्टेऽनुपूर्वम् । पुरोडाशावभिघार्योद्वास्योपस्तीर्णे निधायाऽनक्ति यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मवान् सोम घृतवाह्नि भूत्वाऽग्निं गच्छ स्वर्यजमानाय विन्देति १४ यथादेवतमन्यत् १५ प्रत्यनक्ति कपालानि यानि घर्मे कपालान्युपछिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्र वायू विमुञ्चतामिति १६ तूष्णीं वा १७ सङ्ख्ययोद्वासयति १८ प्रियेण धाम्नेति हवींषि वेद्यां कृत्वा ध्रुवा असदन्निति सर्वाण्यालभते १९ पाहि मामित्यात्मानम् २० अत्र वा व्रतोपायनम् अत्र वा व्रतोपायनम् २१ ८ 2.8

इति कातीये श्रौतसूत्रे द्वितीयोऽध्यायः

होतृषदनं कृत्वाऽपरेण वेदिं श्रोणिं वोत्तरेणेध्मात्समिधमादायाऽग्नये समिध्यामानायाऽनुब्रूहीत्याह १ होतरित्येके २ प्रथमस्थानेन प्राक् स्विष्टकृतः ३ मध्यमेनेडायाः ४ शेषमुत्तमेन ५ सन्तन्वन्निव मेऽनुब्रूहीत्याह यजमानः ६ अङ्गुष्ठाभ्यां चाऽवबाधते पाद्याभ्यां वेदमहममुमवबाध इति द्वेष्यम् ७ अभावे द्विषन्तं भ्रातृव्यमिति वा ८ यावत्सामिधेनि वेदेदमहं तावतिथेन वज्रेणेति ९ प्रतिप्रणवमाधानम् १० समिद्ध इति प्रागतः सर्वमिध्ममेकवर्जमनुयाजाश्चेत् ११ अनुवचनान्ते वेदेनाऽहवनीयं त्रिरुपवाज्य स्त्रुवेण पूर्वमाघारमाघार्याऽह अग्निमग्नीत्सम्मृ-ड्ढीति १२ इध्मसन्नहनैरनुपरिधि सम्मार्ष्टि अग्ने वाजजिदिति त्रिस्त्रिः परिक्रामम् १३ तूष्णीमुपरि १४ अपरमाहवनीयादञ्जलिं करोति नमो देवेभ्यः स्वधा पितृभ्य इति दक्षिणत उत्तानम् १५ अप उपस्पृश्य सुयमे म इति जुहूपभृतावादायोत्तरां जुहूं कृत्वा दक्षिणाऽतिक्रामत्यङ्घ्रिणा विष्णविति १६ परिधीनपरो सञ्चरो होष्यतः १७ सव्येनेतो दक्षिणेनाऽमुतः १८ वसुमतीमित्यवस्थाय १९ १ 3.1

इत इन्द्र इति जुहोत्युत्तराघारम् १ आघार्याऽसंस्पर्शयन् स्रुचावेत्य जुह्वा ध्रुवां समनक्ति सञ्ज्योतिषेति २ निधायेध्मसन्नहनान्यादाय ओश्रावयेत्याह ३ अस्तु श्रौषडिति अग्नीत् ४ वेदिबर्हिरिध्मशकलमपच्छिद्यैके ५ एवं सर्वत्राऽश्रुतप्रत्याश्रुतेषु ६ अथ प्रवृणीते अग्निर्देवो दैव्यो होता देवा-न्यक्षद्विद्वांङ्!न्मा!नुष्वद्भरतवत् ७ अमुवदमुवदिति यजमाना-ऽर्षेयाण्याह परस्तादर्वाञ्चि त्रीणि ८ यावन्तो वा मन्त्रकृतः ९ पुरोहिताऽर्षेयेण वा १० क्षत्रियवैश्ययोश्च नित्यम् ११ मनुवदिति वा सर्वेषाम् १२ ब्रह्मण्वदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारोऽसौ मानुष इति होतृनामग्रहणम् १३ उपांशु वा १४ सम्मृष्टा उपविशतः १५ अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधेः १६ घृतवतीमित्युक्ते स्रुचावादायाऽति-क्रम्याऽश्राव्याऽह समिधो यजेति पञ्च प्रयाजान्समिध्हतमे १७ यज यजेति शेषम् १८ ध्रुवस्तिष्ठन् १९ पूर्वं पूर्वं वाऽभिक्रामम् २० उपभृतो जुह्वामानयत्यनवमृशंश्चतुर्थम् २१ एवं प्रवृद्धौ २२ अनुयाजेषु च २३ उत्तरां जुहूमध्युह्य प्राचीमवहृत्य जुहोति २४ एवं सर्वत्र २५ २ 3.2

नाभिदेशे धारणम् १ प्रयाजाऽनुमन्त्रणमेको ममिका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति २ एवं मिथुनैर्यथासंख्यम् ३ न तस्य किञ्चनेति पञ्चमे ४ त्विषिमानपचितिमान् यशस्वी ब्रह्मवर्चस्यन्नाद इति च ५ आगन्तूनां चतुर्थपञ्चमाभ्यां स्थानात् ६ प्रथमचतुर्थाभ्यां वा यथालिङ्गम् ७ सर्वान्वोत्तमेनोपायित्वात् ८ एत्य जुहवाऽभिघारणं ध्रुवाया हविष उपभृतश्च ९ आज्यभागाभ्यां चरत्याग्नेयेन सौम्येन १० चतुरवत्तं सवषट्कारासु ११ अनिधायाऽवदायाऽवदाय

ध्रुवामभिघारयत्याप्यायतां ध्रुवा हविषा यज्ञं प्रति देवयड्भ्यः । सूर्याया ऊधो अदित्या उपस्थ उरुधारा पृथिवी यज्ञेऽस्मिन्निति १२ अनुब्रूहीत्युक्त्वा नाऽपव्याहरेद्धोता चाऽश्रावणात् १३ आश्राविते‌ऽग्नीदाप्रत्याश्रवणात् १४ प्रत्याश्राविते‌ऽध्वर्युराहोतृप्रैषात् १५ होता आवषट्कारात् १६ सोमे च ग्रहं गृहीत्वोपाकरणात् १७ उपाकृत उद्गातार आहोतृप्रेषात् १८ होता आवषट्कारात् १९ आग्नेयमुत्तरपूर्वार्द्धे दक्षिणपूर्वार्द्धे सौम्यम् २० समिद्धतमे वा २१ हविर्भ्यां च २२ पुरोडाशावन्तरेणाऽग्नीषोमा उपांश्वाज्यस्य २३ विष्णुर्वा अमावास्यायां होत्राऽम्नानात् २४ यावद्धविरुत्तरार्द्धात्स्विष्टकृतः २५ तत एव होमः २६ नाऽज्यादशेषात् २७ असंसृष्टामाहुतिभिः २८ निधाय २९ ३ 3.3

सञ्चरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वाऽन्यतरत आज्यमुभयतो वाऽग्नेयात् १ भागांश्च २ अध्वर्युसञ्चरेण ब्रह्मणे प्रदाय पूर्वणैकेऽप उपस्पृश्येडां पञ्चावत्तां दक्षिणतो मध्याच्च यावद्धविः स्विष्टकृद्वदाज्यम् ३ यजमानभागं पूर्वार्द्धाद्दीर्घं प्रशीर्य पुरस्ताद् ध्रुवायाः करोति ४ इडां होत्रे प्रदाय विसृजन्दक्षिणाऽतिक्रामति ५ इडां प्रतिगृह्य होतुरङ्गुलिपर्वणी अनक्ति ६ अवान्तरेडामादधाति पूर्ववत् ७ इडां च ८ सर्वेऽन्वारभन्ते ९ इडोपहूतेत्युच्यमान आग्नेयं वर्हिषदं करोति ब्रध्न पिन्वरमाऽयुर्मे धुक्ष्व प्रजां मे धुक्ष्व पशून्मे धुक्ष्व ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्रजया पशुभिराप्यायस्वेति तं चतुर्द्धा कृत्वा १० बर्हिषि ऋत्विग्भ्य आदिशति ११ उभौ वाऽविशेषात् १२ अत्र पितर इति यजमानो जपति १३ विसृज्याऽमीमदन्तेति १४ एकैकमाहरति १५ द्यावापृथिव्योरुपह्वानेऽग्नीधे षडवत्तम् १६ प्राश्नात्युपहूता पथिवीति १७ आशासाने मयीदमिति यजमानो जपति १८ उपहूतां प्राश्नति युक्ताः १९ यजमानश्च २० पवित्रयोर्मार्जयन्तेऽपरेण वेदिं सुमित्रिया न इति २१ यजमानस्य प्राणापानौ पातमिति प्रस्तरे ते करोति २२ तूष्णीं वा २३ अत्र वा ब्रह्मा प्राश्नाति २४ भागमस्मै परिहरति २५ यजमानभागं चाऽप्रोषिते २६ अन्वाहार्यमभिघार्योद्वास्याऽन्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायाऽलभते प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यूर्गस्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्टाऽमुत्राऽमुष्मिन् लोक इह चेति २७ सा दक्षिणा २८ उदगुद्वासयति हविश्च २९ ४ 3.4

समस्योल्मुके समिधमादाय ब्रह्मन्प्रस्थास्यामि समिधमाधायाग्नि-मग्नीत्सम्मृड्ढीति १ एषा त इति होताऽनुमन्त्रयते २ अजानति यजमानः ३ सम्मार्ष्टि पूर्ववदपरिक्रामं सकृत्सकृत्ससृवांसमिति ४ ब्रह्माऽनुज्ञातो-ऽनुयाजैस्त्रिभिश्चरत्यौपभृतं समानीय ५ अतिक्रम्याऽश्राव्याऽह देवान्यजेति ६ यज्ञ

यजेत्युत्तरौ ७ देवान्देवानिति वा सर्वत्र नियमशब्दात् ८ विकृतिदर्शनाच्च ९ प्रतीचो जुहोति १० उपसत्सु च ११ ध्रुवः १२ चतुर्थं समानीय प्राचीम् १३ अभिचरन्ननुयाजाऽनुमन्त्रणम् अशन्यमुं जहि ह्लादुन्यमुं जहि उत्कुष्यमुं जहि इति १४ एवं प्रवृद्धो समं विभजेत् १५ स्वस्थानाऽन्त्येन वोपायित्वात् १६ एत्य जुहूपभतौ व्यूहत्यग्नीषोमयोरिति जुहूं प्राचीं दक्षिणेनोत्तानेनाऽग्नीषोमौ तमितीतरेणेतरां नीचा प्रतीचीम् १७ यथादेवतमन्यत् १८ अध्वर्युर्वाऽनूज्जयत्वयं यजमानो वाजस्यैनमिति पूर्वे यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टीत्युत्तरे १९ अभ्युक्ष्य जुह्वा परिधीननक्ति यथापूर्वम् २० ५ 3.5

वसुभ्य इति प्रतिमन्त्रम् १ प्रथमं परिधिं गृहीत्वा आश्राव्याऽहेषिता दैव्या होतारो भद्र वाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि इति २ पशौ प्रेष्येति ३ सञ्जानाथामिति प्रस्तराऽदानम् ४ विधृती स्थाने कृत्वाऽनक्त्येनं व्यन्तु वय इति ५ अग्रं जुह्वामुपभृति मध्यं मूलमितरस्याम् ६ मरुतामिति नीचैर्हृत्वा तृणमादायाऽनुप्रहरति ७ हस्तेनाऽचरति ८ यजमानभागं च प्रोषिते ९ क्षत्रियवैश्ययोश्च नित्यम् १० अहं त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तव योनिरस्मि । ममैव सन्दिवि देवेष्वधि पुत्रः पित्र्! ये लोककृज्जातवेदः स्वाहेति ११ सूक्तवाकाऽन्ते १२ अग्नीदाहाऽनुप्रहरेति १३ प्रास्य तृणं चक्षुष्पा इत्यात्मानमालभते १४ संवदस्वाऽगानग्नी-दगञ्च्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि इति एतेषां संवदस्वाऽगञ्छ्रषडित्यग्नीच्छेषमितरो व्यत्यासं ब्रूतः १५ परिधीननुप्रहरति यं परिधिमिति प्रथममितरौ च युगपदग्नेः प्रियमिति १६ स्रुचौ प्रगृह्णाति संस्रवभागा इति संस्रवाञ्जुहोति १७ घृताची इति धुरि निदधात्यनसि चेद् ग्रहणम् १८ स्फ्ये पात्र्! यां चेत् १९ यज्ञ नमश्च त इति वेदिमालभते २० वेदं होता स्रुक्सुर्वमध्वर्युराज्यस्थालीमग्नीदादाय २१ ६ 3.6

पत्नीसंयाजेभ्यो गार्हपत्यं गच्छन्ति १ अध्वर्युः पूर्वदक्षिणेन गार्हपत्यमेत्य पूर्वेणाऽपरेणान्तरेण पत्नीमिकेषाम् २ उपविश्य दक्षिणं जान्वाच्य ३ एवं सर्वत्रोपविष्टहोमेषु ४ उपांशु चरन्ति ५ चरणशब्दे सर्वे देवताऽन्यत्र ६ यजति सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति ७ तृतीयेऽन्तर्धानं पुरस्तात् ८ पत्न्यन्वारभतेऽध्वर्युम् ९ शंय्वन्तं भवतीडान्तं वा १० शंय्वन्ते वेदतृणमादायाऽनक्ति प्रस्तरवत्स्रुचि स्रुवे स्थाल्यां च ११ अग्नीदा-हाऽनुप्रहरेति १२ प्रास्य तृणादि पूर्ववत् १३ शंय्वन्ते प्रगृह्णात्यग्नेऽदब्धायो इति १४ सव्येनाऽवृत्य दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति च १५ उलूखले मुसले यच्च शूर्प आशिश्लेष दृषदि यत्कपाले उत्प्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहेति पिष्टलेपाञ्जुहोति १६ ७ 3.7

पत्नी वेदं मुञ्चति वेदोऽसीति योक्तम् १ प्र मा मुञ्चामि वरुणस्य पाशाद्येन मा बध्नात्सविता सुशेव। ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधात्विति २ स्तृणात्यावेदेः ३ ध्रौवं समिष्टयजुर्जुहोति देवा गातुविद इति ४ बर्हिः सम्बर्हिरिति ५ वेद्यां प्रणीता निनयति परीत्य कस्त्वेति ६ पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनं रक्षसामिति ७ पूर्णपात्रं निनयति परीत्य सन्ततं यजमानोऽञ्जलिना प्रतिगृह्णाति संवर्चसेति ८ मुखं विमृष्टे ९ विष्णुक्रमान् क्रमते दिवि विष्णुरिति प्रतिमन्त्रं पृथिव्यामितीत ऊर्ध्वो वा १० अस्मादन्नादिति भागमवेक्षते ११ अस्यै प्रतिष्ठायै इति भूमिम् १२ अगन्म स्वर् इति प्राङ् १३ सञ्ज्योतिषेत्याहवनीयम् १४ स्वयम्भूरिति सूर्यम् १५ वर्चोदा इति यं वा कामं कामयते १६ सूर्यस्येत्यावर्तते प्रदक्षिणम् १७ ग्रहग्रहण-प्रतिगरहोमेषु च १८ गार्हपत्यमुपतिष्ठते गृहपत इति शतं हिमा इति ब्रूयाद्वा १९ सूर्यस्येत्यावर्तते प्रदक्षिणम् २० गच्छति प्राङुरु विष्णविति २१ ततोऽसि तन्तुरस्यनु मा तनुह्यस्मिन्यज्ञेऽस्यां साधुकृत्यायामस्मिँ ल्लोक इदं मे कर्मेदं वीर्यं पुत्रोऽनु सन्तनोत्विति पुत्रस्य नाम गृह्णाति २२ आत्मनोऽविओद्यमाने तन्तवे त्वा ज्योतिषे त्वेति वा २३ आहवनी-यमुपतिष्ठते तूष्णीम् २४ व्रतं विसृजते येनोपेयात् २५ सं यज्ञपतिराशिशेति भागं प्राश्नाति २६ ब्राह्मणं तर्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्पयतीति श्रुतेः २७ ८ 3.8

इति कातीये श्रौतसूत्रे तृतीयोऽध्यायः ३

अपराह्णे पिण्डपितृयज्ञश्चंद्रा ऽदर्शनेऽमावास्याम् १ दक्षिणाग्नौ श्रपणं होमश्च २ परिस्तीर्य तं पूर्ववत्पात्रासादनमेकैकशः ३ अपरेण गार्हपत्यं चरुमपूर्णं स्रुचं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् ४ सकृत्फलीकरोति ५ सारतण्डुलमपूर्णं श्रपयित्वाऽभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमाय इति च ६ प्रास्य तद्दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा ७ उल्मुकं परस्तात्करोति ये रूपाणीति ८ उदपात्रे-णाऽवनेजयत्यपसव्यं सव्येन वोद्धरणसामर्थ्यात् ९ असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृति त्रीन् १० उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वा यथाऽवनिक्तं पिण्डान्ददात्यसावेतत्त इति ११ ये च त्वामन्विति चैके १२ अत्र पितर इत्युक्त्वा उदङास्त आ तमनात् १३ आवृत्याऽमीमदन्तेति जपति १४ अवनेज्य पूर्ववन्नीविं विस्रंस्य नमो व इत्यञ्जलिं करोति १५ एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डम् १६ ऊर्णा दशा वा १७ वयस्युत्तरे यजमानलोमानि १८ ऊर्जमित्यपो निषिञ्चति १९ अवधायाऽवजिघ्रति यजमानः २० उल्मुकसकृदाच्छिन्नान्यग्नौ २१ आधत्तेति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा २२ प्रेतेभ्यो ददाति जीवत्पितृकोऽपि जीवाऽन्तर्हितेऽपि २३ जीवत्पितृकस्य होमान्तम् २४ अनारम्भो वा २५ न व्यवेते जातूकर्ण्यः २६ न जीवन्तमतीत्य ददातीति श्रुतेः २७ पूर्वो वाऽङ्गत्वात्पिण्डपितृयज्ञः २८ प्रकरणकाललिङ्गाऽनुग्रहवचनाऽनाहिता-ग्निश्रुतिभ्योऽनङ्गम् २९ अङ्गं वा समभिव्याहारात् ३० १

4.1

**दर्शेष्टौ सान्नाय्यनिरूपणम् ।**

श्वो नोदेतेत्यदृष्टे वा पर्णशाखां छिनत्ति शामीलीं वा इषे त्वोत्यूर्जे त्वेति वा १ छिनद्मीति वोभयोः साकाङ्क्षत्वात् २ यथोक्तं वा । सन्नमयामीति वोत्तरे ३ बहुलपलाशामशुष्काग्रां प्रागुदीचीमन्यतमां वा ४ व्रतमुपैति ५ यथोक्तं वा ६ मातृभिर्वत्सान्संसृज्य वत्सं शाखयोपस्पृशति वायव स्थेति ७ उपायव स्थेति चैके ८ देवो व इति मातृणामेकां व्याकृत्य ९ ऐन्द्रं भवति माहेन्द्रं वा १० यजमानस्य पशूनित्यग्न्यगारस्याऽन्यतरस्य पुरस्ता-च्छाखामुपगृहति ११ मूलादुपवेषं करोति वेषोऽस्युपवेषो द्विषतो ग्रीवा उपवेड्ढि वेशाँ अग्ने सुभग धारयेह । ऋद्धाः कर्मण्या अनपायिनो यथाऽसन्निति १२ सान्नाय्ये शाखासंयोगात् १३ उपधानाद्वोभयोः १४ वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ १५ त्रिवृद्वा १६ यवाग्वाऽग्निहोत्रहोमः सन्नयतस्तां रात्रिम् १७ हुत उपसृष्टां प्रब्रूतादित्याह १८ प्रोक्ते द्यौरसीति स्थाल्यादानम् १९ मातरिश्वन इत्यधिश्रयति २० वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्वा २१ वाग्यतो दोहयत्यशूद्रे ण २२ स्थाल्यन्वारब्धे देवस्त्वेत्यासिच्यमाने जपति २३ कामधुक्ष इति प्रश्नः २४ प्रोक्ते सा विश्वायुरित्याह २५ एवमितरे उत्तराभ्यां प्रतिमन्त्रम् २६ विसृष्टवागुत्तरा अनन्वारब्धे २७ यावत्स्वमधिकारात् २८ तिस्रो वा नित्यत्वात् २९ आदिसामर्थ्यात् ३० दर्शनाच्च ३१ परिक्षालनमानयति सम्पृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातय इति ३२ उद्वास्याऽतनक्ति प्राग्घतशेषेणेन्द्र स्य त्वेति ३३ सोदकेनाऽपिदधात्यमृन्मयेन विष्णो हव्यमिति ३४ निधाय वत्साऽपाकरणं पूर्ववत् ३५ प्रातराग्नेय ऐन्द्रा ग्नश्च द्वादशकपालोऽसन्नयतः ३६ निरूप्याऽज्यं प्रातर्दोहनमन्यस्मिन् ३७ परिक्षालनान्तं कृत्वा सायंदोहनमाहृत्य प्रातर्दोहं श्रपयित्वाऽमिघार्योद्वास्योः भावनक्ति ३८ शृतस्याग्रेऽवद्यतीति श्रुतेः ३९ समस्य मार्जनम् ४० इन्द्रा ग्न्योरिति व्यूहनम् ४१ सह शाखया प्रस्तराऽनुप्रहरणम् ४२ परिधिभिः सहोपवेषं जुहोति जुहोमि त्वा सुभग सौभगाय पुरुतमं पुरुहूत श्रवस्येति ४३ पौर्णमासवदन्यदसद्यः ४४ सोमयाजी सन्नयेत् ४५ कामादितरः ४६ त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत ४७ पञ्चदश दाक्षायणशज्ञी ४८ अग्निहोत्रमेव वा जुहुयात् ४२ २ 4.2

कर्मशब्दो द्र व्यदेवतायुक्तो यजतिः १ दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात् २ दर्शनाच्च ३ वैश्वदेवधर्माश्चातुर्मास्येषु वचनप्रवृत्तिभ्याम् ४ सोमाच्चाऽवभृथे सामप्रतिषेधात् ५ कणवत्पशौ न मन्त्रोपदेशात् ६ विशये लौकिकमयुक्तत्वात् ७ विधिविशेषः कर्मण्येकद्विशब्दपरिमाणद्र व्य-देवतागुणसामान्येभ्यः ८ नियमो द्र व्यदेवताविरोधे द्र व्यस्य समवायात् ९ आमिक्षायामुभयोस्तन्निर्वृत्तेः १० नैकचोदनात् ११ दध्नः सङ्घातात् १२ पयसस्तद्भावात् १३ पशोः सान्नाय्यस्य तदुक्तम् १४ प्रायश्चित्तश्रुतेश्च १५ पयसः कालाऽनन्तर्यधर्माऽनुग्रहेभ्यः १६ सद्यस्त्वं काशकृत्स्निः १७ अनुवादः पूर्वस्येति वात्स्यबादरी १८ स्थानापत्तेर्द्रे व्येषु धर्मलाभो-ऽविप्रतिषिद्धः १९ यथार्थमूहश्चोदिते २० न प्रकृतावपूर्वत्वात् २१ वचनाऽर्थलोपविरोधेभ्योऽप्रवृत्तिः २२ परार्थोत्पत्तेस्तदभावेऽभावः २३ चोदितत्वाद्वा भावः २४ न विपक्षे क्रियाः स्युः समभिव्याहारात् २५ ३ 4.3

## दाक्षायणयज्ञनिरूपणम्

दाक्षायणयज्ञः प्रजापश्वन्नयशस्कामस्य १ नामफलगुणयोगात्कर्मान्तरम् २ गुणविधानं वा सन्निधिसम्पद्वचनाभ्याम् ३ अग्नीषोमीयः पौर्णमास्या-मैन्द्रा ग्नोऽमावास्यायाम् ४ सान्नायवत्प्रातः ५ अमावास्यायां पयस्या मैत्रावरुणी ६ तत्रैव द्रो हणं शृते वा दध्यानयति ७ वाजिनं निषिच्योत्करे करोति ८ अनाज्यलिप्तं वा ९ प्रहृत्य तृणं तेन चरति विमुच्य वा स्रुचौ १० बर्हिरवसिञ्चन् गृह्णाति तद्दषभेषु तद्दषभेषु रेतो दधातीति श्रुतेः ११ वाजिभ्योऽनुवाचयति १२ प्रतिवषट्कारं हुत्वा वाजिनशेषेण दिशो व्याधारयति दिश इति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथमम् १३ उत्तमाभ्यां मध्ये पूर्वार्द्धे च १४ स्वाहाकारः सर्वत्र साकाङ्क्षत्वात् १५ शेषमुपह्वयस्वेत्यामन्त्र्! याऽमन्त्र्! य भक्षणमुपहूत इति प्रसूतः १६ युक्त-नामभिर्वा १७ सोमे च १८ साधारणेषु वा सामर्थ्यात् १९ ऋतूनां वाजिनां वाजिनं भक्षयामीति वा २० वाज्यहं वाजिनस्योपहूतस्योपहूतो भक्षयामीति वा २१ वाजे वाजी भूयासमिति वा २२ होत्र-ध्वर्युर्ब्रह्माऽग्नीद्यजमानाः २३ प्रथमो वोभयतस्तु यजमानः २४ दाक्षायणं वा दक्षिणा २५ संवत्सरं वा यजेत २६ मांसस्त्र्! यनृतमूत्रकृतवासांसि वर्जयेत् २७ ४ 4.4

उपांशु काम्यदेवता १ आग्रयणे वैश्वदेवः २ एककपालाश्चाऽवारुणाः ३ प्राजापत्यः ४ सावित्रश्चातुर्मास्येषु ५ वैश्वदेवी ६ वायव्यम् ७ तनूहवींषि ८ दीक्षणीयाप्रायणीयाऽतिथ्यादेवताः ९ देवसूदेविकाहवींषि १० वायव्योऽग्नौ ११ मैत्रावरुणी च १२ ऐन्द्र ः! सौत्रामण्यां प्रथमः १३ वायोधसश्च १४ आग्नेयं प्रतिकाममाहरेत् १५ वर्षार्थे पुनः प्रकृतौ वा ब्रूयाद् वृष्टिकामोऽस्मीति १६ अध्वर्युं ब्रूयात् पुरोवातं च विद्युतं च मनसा ध्यायेति १७ अभ्राण्यग्नीधम् १८ सर्वाण्येतानीति ब्रह्माणम् १९ अन्वारम्भणीयाऽग्नावैष्णव एकादशकपालः सरस्वत्यै चरुः सरस्वते द्वादशकपालो दर्शपूर्णमासाऽरम्भे २०-२१ पष्ठौही दक्षिणा मिथुनौ वा २२ इन्द्रा य विमृध एकादशकपालः पौर्णमासमनु २३ आदिविकल्पः २४ आदित्यश्चरुरमावास्यायाम् २५ ५ 4.5

## आग्रयणेष्टिनिरूपणम्

आग्रयणमैन्द्रा ग्नमग्रपाकस्य १ व्रीहीणां यवानां च २ शैश्वदेवश्चरुः ३ पयसि वा ४ द्यावापृथिवीय एककपालः ५ उद्वास्याऽन्तांश्छादयेदाज्येन ६ आज्यस्य वा यजेत ७ पुराणानां वा चरुः ८ प्रथमजो गौर्दक्षिणा ९ वैश्वदेवस्य च १० दर्शपूर्णमासाऽनीजानो दक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजयेत् किञ्चिद्दद्यात् ११ अग्निहोत्रायणिनो नवैः सायम्प्रातर-ग्निहोत्रहोमः १२ तदाशिता वा पयसा १३ दीक्षितव्रतं च १४ उपसत्सु रौहिणौ कुर्वीत १५ सुत्यासु सवनीयाः १६ सौम्यः श्यामाकचरुरारण्यस्य १७ वैणवो ग्रीष्मे १८ पुनःसंस्कृतो रथो दक्षिणा क्षौमं मधुपर्को वर्षाधृतं वा वासः १९ ६ 4.6

## आधाननिरूपणम्

अमावास्यायामग्न्याधेयम् १ कृत्तिकामृगशिरःफल्गुनीषु २ हस्तो लाभकामस्य ३ चित्रा च क्षत्रियस्य ४ वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः ५ ग्रीष्मः क्षत्रियश्रीकामयोः ६ वर्षाः प्रजापशुकामवैश्यरथकृताम् ७ अग्न्यगारे कुर्वन्ति ८ उदग्वंशं वाऽपरम् ९ दक्षिणपूर्वे द्वारे १० पौर्णमासवद्वपनम् ११ क्षौमे वस्तेऽहते पत्नी च १२ संस्थितेऽध्वर्यवे देये १३ गार्हपत्याऽगारे निर्मथ्याऽभ्यादधाति १४ वैश्यकुलाऽम्बरीषमहा-नसाद्वा १५ दिवाऽश्नाति रात्रौ वा १६ उपाऽस्तमयं देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे । यस्याऽहमस्मि न तमन्तर्यामि स्वम्म इष्टं स्वं श्रान्तं स्वं सुहुतस्त्विति १७ पूर्वेण प्रविशति दक्षिणेन पत्नी १८ पश्चादग्नेरुपविशतो दक्षिणतः पत्नी १९ अश्वत्थशमीगर्भाऽरणी प्रयच्छति २० अभावेऽगर्भस्य २१ वाचं यच्छाऽपूर्णाहुतेरित्याहाऽस्तमिते निशायां पर्युदयं वा प्रधानकालत्वात् २२ ७ 4.7

गार्हपत्यागारेऽजं बध्नाति न वा विद्यमानं प्रातरग्नीधे दद्यादस्तमिते १ रोहिते चर्मण्यानडुहे चत्वारि हविष्पात्राणि मिमीते तं चातुष्प्राश्यं पचति २ उद्वास्याऽसेचनं मध्ये कृत्वा सर्पिरासिच्याऽश्वत्थास्तिस्रः समिधो घृताक्ता आदधाति समिधाऽग्निमिति प्रत्यृचम् ३ उप त्वेति जपति ४ द्वितीयां वाऽध्वर्युः ५ चत्वार ऋत्विजः प्राश्नन्ति ६ राद्धस्ते ब्रह्मौदन इत्याह ७ वरं ददाति ८ संवत्सरं वा पुरस्तात्कुर्यात् ततः सर्वानादधीत ९ गार्हपत्येऽनुगते ग्रामाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा विहरेत् १० रात्रिं जागरणधारणे ११ शकलैर्वा १२ व्युष्टायामुपशमय्य दक्षिणा वा संहरेदन्वाहार्यपचनश्चेत् १३ स्थानमुल्लिख्याऽभ्युक्ष्याऽन्वारब्धे हिरण्यं निधायोषाऽखूत्करान्निवपत्यन्तेषु शर्कराः १४ हिरण्यमुपर्येके १५ एवमितरयोः १६ पुरस्तादाहवनीयस्याऽष्टासु प्रक्रमेष्वेकादशसु द्वादशसु मत्या वा १७ इतरस्य वितृतीये दक्षिणतः १८ उत्सृप्तेऽग्निमंथनमनुत्सृप्त एके १९ उदिते तूद्धरणम् २० अपरेण गार्हपत्यायतनम् २१ अश्वमानयेति ब्रूयात् २२ स्थितेऽश्वे पुरस्तात् २३ जाते वरदानम् २४ मनसैके २५ तस्याऽभिश्वासः प्राणममृते दध इति २६ उच्छ्वासोऽमृतं प्राण आदध इति २७ ८ 4.8

दारुभिर्ज्वलन्तमादधाति भूर्भुव इति सम्भारेष्वमुष्य त्वा व्रतपते व्रतेनाऽदध इति १ वरुणस्य त्वेति क्षत्रियस्येन्द्र स्य त्वेति राजन्यस्य २ मनोष्ट्वा ग्रामण्य इति वैश्यस्य ऋभूणां त्वेति रथकृतः ३ रथन्तरं गायेति प्रेष्यति ४ गानमध्वर्योः ५ ब्रह्मा वा वेदयोगात् ६ युक्तत्वाच्चाऽध्वर्योः ७ इध्मेनोद्धरणमुपयम्य ८ यथैनं धूम उपेयात् ९ वामदेव्यमिति प्रेष्यति १० अश्वः पुरस्ताद्युवा तदभावेऽयुवाऽश्वाभावेऽनड्वान् ११ सम्भारान्न-धिष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं नीत्वा आवर्त्य स्थापयति १२ बृहदिति प्रेष्यति १३ अग्निना पदं द्विरुपस्पृश्य तृतीयेनाऽदधाति द्वितीयेन प्रथमेन वा भूर्भुवःस्वरिति पूर्ववत् १४ पुरस्तात्परिक्रम्येध्मपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेत्याह १५ आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिः १६ दक्षिणा-ग्निमादधाति १७ सभ्यं च निर्मथ्य १८ गां दीव्यध्वमित्याह १९ धारणोपस्थानमतः २० ९ 4.9

श्यैतवारवन्तीययज्ञायज्ञियानीति च प्रेप्यति १ दक्षिणेनाऽग्नीन्परीत्यो-दगुत्सृजति २ ऋतुनक्षत्रसम्भारसामवपनचातुष्प्राश्यजागरणेध्मपूर्वार्द्ध-ऽन्वारम्भणसार्पराज्ञीर्न वा कुर्यात् ३ अग्निहोत्रं तूष्णीं श्रुतेः पूर्णाहुत्यन्ते ४ निरूप्याऽज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्योत्पूयाऽवेक्ष्य गृहीत्वाऽन्वारब्ध एवं सर्वत्र स्वाहेति ५ वरं ददामीति वाग्विसर्जनम् ६ द्वादशाहान्ते तनूहवींषि निर्वपति मासे द्वितीये तृतीये षण्मास्ये संवत्सरे सद्यो वा न वा ७ अग्नये पवमानाय प्रथमा ८ अग्नये पावकायाऽग्नये शुचये च द्वितीया ९ अदित्यै चरुस्तृतीया १० आग्नेय एव वा पुरस्तादादित्यस्य ११ षड् दक्षिणाः प्रतिविभज्य ददाति द्वादश चतुर्विंशतिं वा १२ भूयसीश्च यथाश्रद्धम् १३ धेनुरादित्यस्य १४ अनृता-ऽतिथ्यपनोदपूतिदावधिनर्बीसपक्वनात्युदकानि वर्जयेत् १५ ब्रह्मचार्य-ग्निनित्यधारी क्षीरहोम्यग्निमुपशायी द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः १६ १० 4.10

## पुनराधेयम्

पुनराधेयमाधानाऽप्रतिज्ञातस्य १ राज्ययशस्कामस्य वा २ त्रिरात्रावरमग्नीनुत्सृज्य ३ सद्यो वा ४ पुनर्वस्वोः ५ वर्षासु मध्यन्दिने वा ६ कुशैराधानम् ७ व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्थाने निदधात्येवमाहमनीयस्य यावं सद्यश्चेत् ८ आग्नेयः पञ्चकपाल उपांशु प्रागुत्तमादनुयाजात् ९ तद्वर्जं वा १० अग्नीनिति वा प्रथमे प्रयाजेऽनुयाजे च ११ आज्यभागो द्वितीयोऽग्नये पवमानायेन्दुमते वा १२ हिरण्यं दक्षिणाऽनड्वान्वाऽग्न्याधेयिकीश्चेच्छ्ङ्ग्रुतेः १३ अग्न्याधेयवदन्यत्सद्यः १४ अपराह्णे मैत्रावरुणी वशाऽनस्तमिते पुरोडाशेडान्तं कृत्वा रात्रिशृतया प्रातश्चरन्ति तत्र आधानम् १५ ११ 4.11

## उपस्थाननिरूपणम्

सयमाहुत्यां हुतायां यजमानोऽग्नी उपतिष्ठते वात्सप्रेण १ न वा २ तिस्रस्तिस्ररूपप्रयन्तोऽस्य प्रत्नां परि ते चित्रावसविति च ३ सन्त्वमित्युपविश्य ४ गां गच्छत्यन्ध स्थेति ५ संहितेत्यालभते ६ गार्हपत्यं गत्वोपतिष्ठत उप त्वेति ७ गां गच्छतीड एहीति ८ काम्या एतेत्थालभते ९ सोमानमित्यनुदकं व्रतोपायनवत् १० पौर्णमासवत्पुत्रनामग्रहणम् ११ भूर्भुवः स्वरिति चोभौ १२ प्रवत्स्यन्त्सर्वान्नर्येति प्रतिमन्त्रम् १३ गच्छति मत्या वाग्विसर्जनम् १४ प्रवसन्याजमानं कुर्याद्यथाकालमात्मसंस्काराद् धर्ममात्रत्वाच्छ्रुतेश्च १५ एत्य च मत्या वाग्यमनम् १६ समित्पाणिरनुपेत्य कञ्चिदुपतिष्ठते आहवनीयगार्हपत्यदक्षिणाग्नीनागन्मेति १७ समित्परिसमूहनानि चो-पविश्य १८ तूष्णीं वोपस्थानं पूर्ववत् १९ एत्य च २० गृहा मा बिभीतेति गृहानुपैति २१ क्षेमाय व इति प्रविशति २२ न हिंस्याद् गृह्यान्कामं श्वः २३ १२ 4.12

## अग्निहोत्रनिरूपणम्

उद्धरेति यजमानो ब्रूयात्सायं प्रातरग्निहोत्रे १ गार्हपत्यादाहवनीयस्यो-द्धरणमनस्तमितानुदितयोः २ प्रत्यङ्मुखो वा सायं निदध्यात्तस्मिन्सायं प्रातर्होममेके ३ नित्यो दक्षिणाग्निः ४ सर्वे गतश्रियः ५ सदा वाऽऽहरणम् ६ एकेषामुपवसथे ७ नवाऽवसिते वा ८ तस्मिन्पचेयुरमांसम् ९ पाक्याभावे गोःपयोऽधिश्रियतवै ब्रूयात् १० तद् ब्राह्मणं पाययितवै ब्रूयात् ११ अन्तरेणाऽपराग्नी गत्वा दक्षिणेन वाऽप्रदक्षिणमाहवनीयं परीत्यो-पविशति यजमानः १२ पत्नी च पूर्ववत् १३ अपरेणाऽहवनीयं कूर्चं निदधाति कुशान्वा १४ परिस्तरणं सर्वेषां प्रागुदग्भिरुदगग्रान्दक्षिणा-ग्रान्करोति श्रुतेः १५ आहवनीयं पर्युक्ष्योदधारां निनयत्यागार्हपत्यात् १६ तं च १७ ततो दक्षिणाग्निम् १८ हुते च धारावर्जम् १९ १३ 4.13

अग्निहोत्रीं दोहयति पुंवत्सामशूद्रे ण स्थाल्यामार्यकृत्यामूर्ध्वकपालायां दक्षिणतः प्राचीमुदीचीं वा १ पूर्वेणाऽहवनीयं आहृत्य गार्हपत्येके-ऽधिश्रयत्युत्तरतो निरुह्याऽङ्गारान् २ एवमन्यत्राऽपि होमार्थस्याऽहरणम् ३ दक्षिणेन वौषधम् ४ तृणेनाऽवज्योत्याऽसिच्याऽऽपः पुनरवज्योत्य निधायं त्रिरुद्वासयत्युदक् ५ अस्तमिते जुहोति ६ वैकङ्कतं स्रुक्स्रुवं प्रतप्य पाणिना सम्मार्ष्टि ७ पुनः प्रतप्योन्नेष्यामीत्याह ८ ओ३मुन्नयेति यजमानस्तिष्ठन् ९ चतुरः स्रुवानुन्नयति १० स्थाल्यां परिशिनष्टि तद् ब्राह्मणः पिबेत् ११ उपरि समिधं धारयन्वार्क्षीमध्यधि गार्हपत्यादाहवनीयं हरति मुखमात्रे धारयन् १२ मध्ये निगृह्योद्गृह्योपविश्य समिधमादधात्यग्निज्योतिषं त्वा वायुमतीं --- स्वर्ग्यां स्वर्ग्यायोपदधामि भास्वतीमिति १३ प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति सजूरिति वा १४ अग्निर्वर्च इति ब्रह्मवर्चसकामस्य १५ कूर्चे निधाय गार्हपत्यमवेक्षते होष्यन्नस्मिन् १६ तूष्णीमुत्तरां भूयसीम् १७ भूयिष्ठं स्रुचि १८ द्विः प्रकम्प्य निदधाति १९ उपमृज्य स्रुचं कूर्चे निमार्ष्टि नमो देवेभ्यः स्वधा पितृभ्य इति दक्षिणत उत्तानम् २० अप उपस्पृश्य २१ इतरयोश्च पुष्टिकामः स्थाल्याः स्रुवेण इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजां रमयतु प्रजापतिः । अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहा इति गार्हपत्ये २२ तूष्णीं द्वितीयाम् २३ अग्नयेऽन्नादायाऽन्नपतये स्वाहेति दक्षिणाग्नौ २४ तूष्णीं द्वितीयाम् २५ अनामिकया द्विः प्राश्नाति २६ उत्सृप्य निर्लेढ्याऽचायोत्सिञ्चति देवाञ्जिन्व पितृञ्जिन्व तृतीयामुदुक्षति

सप्त ऋषीञ्जिन्वेति २७ चतुर्थी कूर्चस्थाने त्रिर्निषिञ्चत्यग्नये पृथिवीक्षिते स्वाहा पृथिव्या अमृतं जुहोमि स्वाहेति २८ स्रुक्स्रुवमाहवनीये प्रतप्य निदधाति २९ समिध आदधाति सर्वेषु यथापर्युक्षितं समिदसि समिद्धो मेऽग्ने दीदिहि समिद्धा ते अग्ने दीद्यासमिति ३० वाग्यतो दोहप्रभृत्याहोमात् क्षीरहोता चेत् ३१ १४ 4.14

प्रातर्जुहोत्यनुदिते १ अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणं गार्हपत्यं गत्वोपविशति यजमानः २ पत्नी च यथादेशम् ३ अथ आचामति वृष्टिरसि वृश्च मे पाप्मानं सत्येन व्रतमुपैम्यापः सत्यं मयि व्रतमिति ४ वाचं विसृज्य पुनराचामति विद्युदसि वृश्च मे पाप्मानं जह्यपो-ऽवभृथमभ्युपैमि मयि सत्यं गोषु मे व्रतमिति ५ उन्नयामीत्याह प्रातः ६ प्राक्संस्थं समित्पर्युक्षणं धारा चोभयत्र वा ७ अग्निशब्दे सूर्यः ८ रात्र! युषसाहेति वा ९ ज्योतिः सूर्य इति वा प्रातः १० प्रथमाऽस्तमिते पर्युदयं च स्वर्गकामस्य ११ तमोऽभ्यये सायं जुहुयाद्वियति प्रात-रायुष्कामस्य १२ अन्तः पशौ पशुकामस्य सायं प्रातः १३ शयाने श्रीकामस्य प्रातः १४ प्रथमसिद्धे धूप्यमाने प्रजासु निहत्येव सहसा-ऽन्नमत्स्यतः १५ भूयिष्ठार्चिषि गृहीत्वेव सहसा १६ प्रदीप्ततमे श्री-यशस्कामस्य १७ अर्चिःप्रत्यवाये मैत्रेणाऽन्नमत्स्यतः १८ अङ्गारेषु चाकश्यमानेषु ब्रह्मवर्चसकामस्य १९ पयसा स्वर्गकामः पशुकामो वा २० यवाग्वा ग्रामकामः २१ तण्डुलैर्बलकामः २२ दध्नेन्द्रि यकामः २३ अनधिश्रयणं च श्रुतिसामर्थ्याभ्याम् २४ घृतेन तेजस्कामः २५ संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे २६ सायं प्रातर्वा २७ दक्षिणेन प्रवेशनमग्निहोत्रेष्टिषु २८ सायंप्रातराहवनीयस्याऽसनोपस्थाने २९ शय्याऽसनं वा गार्हपत्ये ३० संव्रजन्मनसोपस्मृत्य दक्षिणाग्निम् ३१ अनशित्वा प्रातर्मुहूर्तं सभासनं सभ्यस्य ३२ भस्मोद्धृतमुपेयात् ३३ स्वयं वा जुहुयात् ३४ उपवसथे नियमः ३५ १५ 4.15 इति कातीये श्रौतसूत्रे चतुर्थोऽध्यायः ४

चातुर्मास्यप्रयोगः फाल्गुन्याम् १ वैश्वानरपार्जन्यौ निरूप्येच्छन् २ वैश्वानरो द्वादशकपालश्चरुरुत्तरः ३ वैश्वदेवपर्वन् आग्नेयः सौम्यश्चरुः सावित्रो द्वादशकपालोऽष्टाकपालो वा सारस्वतश्चरुः पौष्णश्चरुः प्रपिष्टानाम् ४ द्विदेवतोऽपि नियमसामर्थ्यात् ५ अर्द्धपिष्टं वोभयसामर्थ्यात् ६ सौमापौष्णदर्शनाच्च ७ अपिष्टो वा देवताऽन्यत्वात् ८ सौमापौष्णे वचनात् ९ एतानि सर्वत्र १० मरुद्भ्यः स्वतवद्भ्यः सप्तकपालः ११ मरुतो वा १२ वैश्वदेवी पयस्या १३ द्यावापृथिवीय एककपालः १४ एतद्वैश्वदेवम् १५ प्राचीनप्रवणे १६ अहतवासाः पत्नी च १७ त एव वरुणप्रघासेष्वपि १८ त्रेधा बर्हिः सन्नह्य पुनरेकधा १९ कुशप्रस्वः प्रस्तर उपसन्नद्ध २० आसाद्याऽग्निमन्थनम् २१ अग्नेर्जनित्रमिति शकलमादाय तूष्णीं वेद्यां करोति २२ वृषणाविति कुशतरुणे तस्मिन् २३ उर्वश्यसीत्यधरारणिं तयोः २४ आयुरसीत्युत्तरयाऽज्यस्थालीं संस्पृश्य पुरुरवा इत्यभिनिधानं तया २५ १ 5.1

अग्नये मथ्यमानायाऽनुवाचयति १ मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणम् २ जाते जातायेति ३ प्रहिरियमाणायेति प्रास्यन् ४ भवतन्न इति प्रास्यति ५ अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेण ६ नवप्रयाजं नवाऽनुयाजम् ७ वरुणप्रघासा महाहविश्च ८ त्रीणि समिष्टयजूंषि जुहोति देवा गातुविदो यज्ञ यज्ञमेष त इति ९ पशौ च १० याँ आवह इति वा पशौ ११ एकं वा वैश्वदेवे १२ पवसंस्थासु वपनं वा प्रागन्त्यात् १३ अपरेण दक्षिणाग्निं दक्षिणं गोदानमुन्दति सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूं दीर्घायुत्वाय वर्चस इति १४ त्र! येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध इति १५ त्र! यायुषमिति यजमानो जपति १६ शिवो नामेति लोहक्षुरमादाय निवर्त्तयामीति वपति १७ एवं पश्चादुत्तरतश्च १८ गृहेषु पौर्णमासं समारूढनिर्मथितयोस्तथा चेत् १९ प्रजाकामस्याऽपि वैश्वदेवम् २० एकेऽधःप्राङ्शायी मध्वाश्यृतुजायोपायी २१ मांस-स्त्र्! यनृतानि वर्जयेदुदकाभ्यवायं च प्रागवभृथात् २२ २ 5.2

## वरुणप्रघासपर्वन्

आषाढ्यामयन्ते योनिरिति समारोह्योदवसाय निर्मथ्य वरुणप्रघासाः १ पूर्वेद्युर्दक्षिणाग्नौ निस्तुषाऽमभृष्टयवानां करम्भपात्रकरणम् २ यावन्तो यजमानगृह्या एकाधिकानि ३ प्रजायां वा जातश्रुतेः ४ त्रीणि वा नित्यत्वात् ५ मेषमिथुनं च ६ अनैडकीरूर्णाः प्रक्षाल्याऽश्लेषयेत्तयोः ७ कुशोर्णा वाऽभावे ८ आहवनीयस्य पुरस्तात्वेदी करोति ९ प्रादेशोऽन्तरा पृथो वा १० रथमात्र! युत्तरा ११ चतुररत्निर्वा पश्चात् सप्त प्राची षड् वा त्रयः पुरस्तात् १२ तेषां मध्ये शङ्कुः १३ अपरिमिता वा १४ स्फ्याद्यासम्मर्शनात्करोति १५ उभयोरेक उत्करः १६ अपरेण वेदिं प्रतिप्रस्थातुः सञ्चरः १७ उत्तरवेदिं निवपत्युत्तरस्याम् १८ शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करं सञ्चरं परिहाप्य १९ शम्यामुदीचीं निदधाति पुरस्ताच्च २० दक्षिणतः प्राचीमुत्तरश्च २१ स्फ्येनाऽन्तर्लिखति तप्तायनीति प्रतिमन्त्रम् २२ विददेऽग्निरिति चात्वाले प्रहरति स्फ्येनाऽन्वारब्धे २३ अग्रे अङ्गिर इति पुरीषं हरति हस्तेन च २४ योऽस्यामिति निवपति पूर्वार्द्धे शङ्कुसहितम् २५ अग्नीदुत्करवत्तूष्णीं हृतम् २६ एवं द्विरपरं द्वितीयस्यां तृतीयस्यामिति विशेषः २७ अनुत्वेति चतुर्थं यथार्थमाहृत्य सिंहयसि इति व्यूहत्युत्तरवेदिम् २८ शम्यामात्रीं वितृतीयामपरिमितां युगमात्रीं यजमान-दशपद्यां वा २९ सोमे वोत्तरे व्यपस्फुरणश्रुतेरसम्भवाच्च ३० मध्ये नाभिं करोति प्रादेशसमां चतुःस्रक्तिम् ३१ प्रोक्षत्युत्तरवेदिं सिकताश्च प्रकिरति सिंहयसि इति प्रतिमन्त्रम् ३२ ३ 5.3

छन्ना वसति १ प्रातः पञ्चगृहीतं गृहीत्वाऽग्नी प्रणयतीध्माभ्यामुपयम्य २ सर्वं वा विभज्य प्राकृतत्वात् ३ प्रणयनं सोमाद्वाच्यत्वात् ४ प्रकृते-र्वाऽनामत्वात् ५ ग्रहणं गुणार्थमुत्तरवेद्यग्निविधानात् ६ आज्यप्रोक्ष-णीरुद्यम्याऽग्नी चाऽहाऽग्निभ्यां प्रह्रियमाणाभ्यामनुब्रूहि एकस्फ्यया-ऽनूदेहीति ७ त्रिरुक्तायां यथावेदि हरणम् ८ प्रतिप्रस्थाता स्फ्येन लिखत्यावेदिश्रोणेरुत्तवेदेर्वा ९ वेद्यन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्ष-तीन्द्र घोषस्त्वेति प्रतिमन्त्रं प्रतिदिशं । यथालिङ्गम् १० दक्षिणांससहितं बहिर्वेदि शेषं निषिञ्चतीदमहं तप्तं वारित्यमुमभिचरन् ११ नाभ्याः श्रोण्यंसेषु पञ्चगृहीतं जुहोत्यक्ष्णया दक्षिणेऽसें! श्रोण्यां श्रोण्यामंसे मध्ये च हिरण्यं पश्यन्सिंहयसीति प्रतिमन्त्रम् १२ भूतेभ्यस्त्वेति स्रुचमुद्यच्छति १३ नाभिं पैतुदारवैः परिदधाति पूर्ववद् ध्रुवोऽसि इति प्रतिमन्त्रम् १४ अग्नेः पुरीषमिति निवपति गुग्गुलुसुगन्धितेजनवृष्णेस्तुकाश्चोपरि शीर्षण्या अभावेऽन्याः १५ तेष्वग्निं निदधाति १६ उद्धतावोक्षिते दक्षिणम् १७ उपयमनीरुपनिवपति १८ प्रणीताद्यतः १९ व्रतोपायनं वाऽकृतं चेत् २० नित्येभ्योऽधिकान्यैन्द्रा ग्नः पयस्ये वारुणी मारुती काय एककपालः २१ नानाऽऽज्यनिर्वपणम् २२ दक्षिणं प्रतिप्रस्थातुः २३ ध्रुवायाः पुरस्ता-

त्पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति समिदन्तेन २४ अनुयाजार्थं सर्वत्र २५ औपभृतासादनम् २६ प्रियेण धाम्नेति वाऽविशेषोपदेशात् २७ उत्तरं वाऽपरकालपरत्वात् २८ प्रतिप्रस्थाता च २९ न वा ३० प्रणीतापत्नीसन्नहनाऽग्निमन्थनाऽऽश्रुतप्रत्याश्रुतप्रैषयजमानवाचनहोतृषदनवरणप्राशित्राऽङ्गुलिपर्वाञ्जनाऽवान्तरेडाभागाऽपराग्न्यवभृथान्न प्रतिप्रस्थाता ३१ कृतानुकरोऽन्यत्र दक्षिणस्याम् ३२ ४ 5.4

वाजिने निषिच्य १ उभयोः करीरान्यावपति शमीपलाशमिश्राणि । मेषमिथुनं च २ मारुत्यां मेषम् ३ सर्वाणि हवींष्युत्तरस्यामासादयति मारुतीं सहाज्यां प्रतिप्रस्थाता दक्षिणस्याम् ४ सम्मार्जनाय प्रेषितेऽसग्मृष्टे प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति ५ संस्तुतानाचष्टे ६ तृणानि वोद्गृह्णाति प्रतिसंस्तुतम् ७ अनाख्यातमहितं ज्ञातिभ्य इति श्रुतेः ८ आख्याते प्रघासिन इत्येनां वाचयति नयन् ९ करम्भपात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखी जायापती वा दक्षिणेनाऽहृत्य तीर्थेन पूर्वेण वेदिमपरेन वा यद् ग्राम इति १० मोषूण इति यजमानो जपति ११ अक्रन्कर्मेत्येनां वाचयति प्रतिनयन् १२ आगते सम्मार्जनाद्याज्यभागाभ्याम् १३ स्रुक्पाणिरास्ते प्रतिप्रस्थाता १४ हविर्भिश्चरति १५ पयस्याप्रचरणकाले मेषौ व्यतिहरतः १६ अन्यतरेणाऽवदानेन सह मेषम् १७ सव्येन स्रुचौ गृहीत्वा प्रतिप्रस्थातुर्वासो दक्षिणेन मरुद्भ्योऽनुवाचयति १८ वारुणी-वदवदानम् १९ हविर्भिश्चरत उभौ स्विष्टकृत्प्रभृति २० इडामवदाय प्रतिप्रस्थात्रे २१ तत्र प्रतिप्रस्थाता मारुत्याः २२ स्रुचौ व्यूहतोऽध्वर्यू २३ समासिच्य वाजिनभक्षः २४ अध्वर्युविकारात्प्रतिस्थाता भक्षेषु २५ मैत्रावरुणश्च होत्रध्वर्युविकारात् २६ समिष्टयजूंषि तूष्णीं दक्षिणस्याम् २७ वारुणीनिष्काषेणाऽवभृथम् २८ तूष्णीमेत्यऽभ्यवेत्य मज्जयत्यवभृथेति २९ जायापती स्नातोऽमज्जन्तौ ३० अन्योऽन्यस्य पृष्ठे धावतः ३१ अन्ये वाससी परिदधाति ३२ पूर्वे दद्यादधिकृतेभ्यो यस्मा इच्छेत् ३३ यथेतमेत्या-ऽहवनीये समिदाधानं देवानां समिदसीति ३४ पत्नी च गार्हपत्ये तूष्णीम् ३५ धेनुर्दक्षिणाऽश्वः षड् वा दश वा ३६

## साकमेश्वपर्वन्

कार्तिक्यां साकमेधा द्व्यहम् १ पूर्वेद्युः पूर्वाह्णेऽग्नयेऽनीकवते पुरोडाशः २ मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुः ३ समिष्टयजुरन्तं भवति ४ बर्हिरनुप्रहरणवर्जं वा ५ इध्मस्थाने शकलपरिधि निधाय मरुद्भ्यो गृह-मेधिभ्यः सायं चरुः पयसि ६ सान्नाय्यवत् ७ तूष्णीं वा ८ एकचोदनाच्च ९ श्रपयित्वाऽभिघार्योद्वास्य शरावयोरुद्धरति पात्र! योर्वा १० आसेचने मध्ये कृत्वा सर्पिरासिञ्चत्याज्यार्थम् ११ यावदुक्तमतः १२ स्तरणयजुषा वेदिमभिमृश्य तूष्णीं वा कृतत्वात्परिधिपरिधानम् १३ शकलान्याधाय मत्योद्धतावासादयति १४ स्रुक्स्रुवं च सम्मार्ष्ट्यनुद्वास्य वा सम्मार्जनम् १५ आज्यभागाभ्यां चरत्याग्नेयं दक्षिणात्सौम्यमुत्तरात् १६ गृहमेधिस्विष्टकृतौ चाऽज्यभागवत्समावदानौ १७ अप्रत्यभिघारणं च १८ अनुद्धृत्य वा सहितमाज्यमधिश्रयति १९ उद्वास्योभयमासादयति २० न प्राशित्रमिडान्तं भवति २१ पूर्वे मार्जनमुपहूय २२ प्राश्नन्ति युक्ताः २३ यजमानगृह्या हविरुच्छिष्टाशा ऋत्विजो ब्राह्मणाश्चाऽन्ये बहुश्चेत् २४ अरिक्तां स्थालीं निदधाति २५ सान्तपनीयां संस्थाप्य २६ प्रातर्वा शेषभावात् २७ मातृभिर्वत्सान्त्संसृज्य निवान्या वत्सं बध्नाति २८ यवाग्वाऽग्निहोत्रहोमः २९ प्रातर्हुत्वाऽहुत्वा वा स्थाल्या दर्व्यादत्ते पूर्णा दर्वीति ३० ऋषभाऽहवयितवै ब्रूयात् ३१ रुते जुहोति ३२ अव्याहरति ब्रह्मा जुहुधीत्याह ३३ देहि म इति जुहोति ३४ ऋषभो दक्षिणा ३५ ६ 5.6

मरुद्भ्यः क्रीडिभ्यः सप्तकपालः १ अदित्यै चरुरन्यत्राऽपि २ समानबर्हिषी वा कालकर्मैकत्वात् ३ महाहविरुदवसाय निर्मथ्य ४ पूर्वेद्युर्वा ५ नित्येभ्योऽधिकान्यैद्रा ग्नौ माहेन्द्र श्चरुर्वैश्वकर्मण एककपालः ६ उत्तरवेद्य-ग्निप्रणयनमन्थनपृषदाज्यं च वरुणप्रघासवत् ७ ऋषभो दक्षिणा ८

## पित्र्येष्टिः

पितृयज्ञ उपांशु चरणम् १ पुरस्तादुपचारः २ ब्रह्मयजमानयोश्च ३ पूर्ववद्वा ४ अपत्नीकः ५ दक्षिणाग्निराहवनीयवत् ६ पूर्वेणाऽहवनीयं प्रणीताः परिहरति ७ अर्थवच्च ८ पितृभ्यः सोमवद्भ्यः षट्कपालः ९ सोमाय वा पितृमते १० पितृभ्यो बर्हिषद्भ्यो धानाः ११ पितृभ्योऽग्निष्वात्तेभ्यो मन्थः १२ चतुर्वा ग्रहणम् १३ गार्हपत्यस्य पुरस्तादवहननपेषणे १४ दक्षिणार्द्धे कपालोपधानम् १५ धानाभर्जनं दक्षिणाग्नौ १६ श्रपणविपर्यासेऽपि धर्माः १७ अभिमृश्याऽर्धाः पिष्ट्वा निवान्या दुग्धे सकृन्मथित एकशलाकया मन्थः १८ अग्रहणं मन्थस्य ततोऽर्द्धाः पिंषन्तीति श्रुतेः १९ ग्रहणं वा चोदितत्वात् २० दक्षिणेन दक्षिणाग्निं परिवृतमुदग्द्वारं तन्मध्ये वेदिं करोत्यवान्तर-दिक्स्रक्तिमाप्यान्ते २१ दक्षिणाग्निं मध्येऽस्याः करोति २२ प्रणीताऽनुहरणं ब्रह्मयजमानौ चाऽनुगच्छतः २३ स्फ्याऽदानादि करोति २४ यज्ञोप-वीत्याज्यग्रहणे २५ द्विर्वोपभृति २६ प्राग्ग्रन्थि बर्हिः २७ विस्रंस्य यूनं चाऽग्रे गृहीत्वा त्रिः स्तृणन्नग्निं पर्येति २८ प्रस्तरमात्रं शिष्ट्वा तावत्प्रतिपर्येति २९ तं स्तृणात्यविधृतिम् ३० प्राक्संस्थं हविरासादनम् ३१ सामि-धेनीप्रैषाद्याज्यभागाभ्यां यज्ञोपवीतिनः सर्वे ३२ पश्चात्परीतो ब्रह्मयजमानौ पुरस्तादग्नीत् ३३ आश्राव्य सीद होतरित्येव ब्रूयात् ३४ अपबर्हिषः प्रयाजा अनुयाजाश्च ३५ असमानयनं वा बर्हिःसंयोगात् ३६ ८ 5.8

प्रत्यगतीत्य जुहोति १ हविर्भिश्चरन्तः प्रतिविपर्यन्ति २ सर्वेभ्योऽवद्यति यथापूर्वं सोमवद्भ्यो मध्यात्सकृत्सकृत्सहावदधाति ३ द्विरभिघारण-मनतिक्रमणं च ४ सोमाय वा पितृमते ५ एवं बर्हिषद्भ्य उत्तरतो धानामन्थपुरोडाशानाम् ६ अग्निष्वात्तेभ्यो दक्षिणतो मन्थपुरोडाश-धानानाम् ७ पुरस्तादग्नये कव्यवाहनाय यथापूर्वं स स्विष्टकृत् ८ ॐ स्वधेत्यस्तु स्वधैति वाऽश्रुतप्रत्याश्रुते स्वधा नम इति वषट्कारः ९ मन्थमुपहूय होताऽध्वर्युर्ब्रह्माऽग्नीदवघ्रायं निदधाति १० प्राशित्रमवदाय इडां वा सर्वे प्राश्नन्ति ११ वेदिं त्रिः परिषिञ्चत्युदपात्रेणाऽध्वर्युर्यजमानो वा १२ स्रक्तिषु पित्रवनेजनं परिषिच्य पूर्ववदुत्तरापरस्यां प्रथमम् १३ सव्ये समवदाय सर्वेभ्यो यथावनिक्तं पिण्डान्ददात्यसावेतत्त इति १४ उत्तरपूर्वस्यां पाणी निमृष्टेऽत्र पितर इति १५ यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमदन्तेत्याहवनीयमुपतिष्ठते १६ मनो न्वाह्वामह इति गार्हपत्यं तिसृभिः १७ प्राचीनावीती प्रविश्य अमीमदन्तेति दाता जपति १८ अवनेज्य पूर्ववत्प्रदक्षिणम् १९ नीवीं विस्रंस्य नमो व इत्यञ्जलिं

करोति षड् वा नमस्कारान् २० गृहान्नः पितरो दत्त इति च २१ ब्रह्माऽऽमन्त्रणादि प्राक्स्रुग्व्यूहनात्प्रयाजवत् २२ यज्ञोपवीतिविपर्ययम् २३ न प्रस्तरमादत्ते २४ अनुप्रहरेत्युक्ते न किञ्चनाऽनुप्रहरति २५तूष्णीमात्मानं संस्पृशति २६ उपस्पृश्य परिधीन्नाऽनुप्रहरति २७ शंय्वन्तं भवति २८ बर्हिः परिध्यग्नौ प्रास्यति २९ हविरुच्छिष्टं च ३० अप्सु प्राश्यं वा ३१ ९ 5.9

## त्रैयम्बकेष्टिः

त्रैयम्बकान्निर्वपति रौद्रा नेककपालान् यावन्तो यजमानगृह्या एकाऽधिकान् १ चतुरो वा २ उदङ्मुखः सर्वम् ३ देशांश्च ४ जुहोतयोऽवषट्कारान् ५ अक्तान्वा ६ पात्र! यां कृत्वा दक्षिणाग्न्युल्मुकमादाय चतुष्पथे पलाशपत्रमध्यमेन होमः ७ सर्वेषामवदानानि सकृत्सकृदतिरिक्तवर्जम् ८ अक्तेषु मिश्रणम् ९ एष त इति जुहोति १० अतिरिक्तमाखूत्कर उपकिरत्येष त इति ११ आगम्य अव रुद्र मदीमहीति जपन्ति १२ अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नानास्त्र! यम्बकमिति १३ देववच्चैतेनैव दक्षिणानाघ्नानाः १४ कुमार्यश्चोत्तरेणोभयत्र पतिकामा भगकामा वा १५ रौद्रा न्यजमानोऽञ्जलिनोदस्यत्यगोः प्रापणम् १६ प्रतिगृह्णात्येनानशक्य उपस्पर्शनम् १७ मूतयोः कृत्वा वेणुयष्ट्यां कुआ!ऽसज्योभयतः स्थाणु-वृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासजति एतत्त इति १८ कृत्ति-वासा इति १९ अनपेक्षमेत्योपस्पृशन्त्यपः २० १० 5.10

शुनासीरीयमतः १ यदेच्छेत् २ पौर्णमासधर्मा बर्हिर्वर्जम् ३ नित्येभ्यो-ऽधिकानि शुनासीरीभ्यां द्वादशकपाल इन्द्रा य वा शुनासीराय ४ वायव्यं पयः ५ लौकिकम् ६ प्रतिधुक्श्रुतेः ७ नाऽविरोधात् ८ प्रकृतिदर्शनाच्च ९ यवागूर्वा १० सौर्य एककपालः ११ सीरं षड्योगं दक्षिणा १२ ओष्टारौ वा १३ श्वेतोऽश्वः सौर्यस्य १४ अभावे गौः १५ संवत्सरेप्सोः फाल्गुन्युद्दृष्टे शुनासीरीयेणेष्ट्वा सोमेन पशुनेष्ट्या वा यजेत पौर्णमास्याम् १६ आवृत्तिरनीजानस्य १७ फाल्गुन्युपवसथे शुनासीरीयं प्रातर्वैश्वदेवम् १८ सपशुषु पशुतन्त्रं प्राधान्यात् १९ पूर्वेद्युर्वैश्वदेवे पाशुकम् २० सद्यो वा २१ वैश्वदेवः पशुः २२ पशुपुरोडाशमनु हवींषि निर्वपति २३ तेषां स्वि-ष्टकृद् भूयस्त्वात् २४ यथोक्तमविरुद्धम् २५ हृदयशूलान्ते वपनम् २६ वरुणप्रघासेषु वारुणः २७ महाहविषि माहेन्द्र ः! २८ शनासीराभ्यां चतुर्थः २९ पुरस्ताद्वा पर्वणः पर्वणोऽन्ते वा ३० ११ 5.11

## मित्रविन्देष्टिः

मित्रविन्दा श्रीराष्ट्रमित्राऽयुष्कामस्य १ दशहविः २ आग्नेयः सौम्यश्चरुर्वारुणो दशकपालश्चरुर्वा यावो मैत्रश्चरुरैन्द्र एकादशकपालो बार्हस्पत्यश्चरुः सावित्रो द्वादशकपालोऽष्टाकपालो वा पौष्णश्चरुः सारस्वतश्चरुस्त्वाष्ट्रो दशकपाल एकं प्रदानम् ३ समस्यानुवाचनम् ४ यजेति च ५ प्रैषाश्च ६ उत्तरे निगमा यथेष्टं जोषणाश्रुतेः ७ अनुलोमा वा चोदनागुणत्वात् ८ पञ्चदश सामिधेन्यः । पुष्टिमन्तावाज्यभागौ-अग्निना रयिमश्नवत्पोषमेव दिवेदिवे । यशसं वीरवत्तमम् ९ गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः । सुमित्रः सोम नो भवेति १० हविषोऽनुवाक्या अग्निः सोमो वरुणो मित्र इंद्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ११ याज्या त्वष्टा रूपाणि ददती सरस्वती पूषा भगं सविता मे ददातु । बृहस्पतिर्ददिन्द्रो बलं मे मित्रः क्षत्रं वरुणः सोमोऽग्निरिति १२ 5.12

हुत्वा स्थाल्याः स्रुवेणोपजुहोति ॥ अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहा सोमो राजा राजपती राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा वरुणः सम्राट् सम्राट्पतिः साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा मित्रः क्षत्रं क्षत्रपतिः क्षत्रमस्मिन्यज्ञे मयि दधातु स्वाहा इन्द्रो बलं बलपितिर्ब्रह्मवर्चसमस्मिन्यज्ञे मयि दधातु स्वाहा बृहस्पतिर्ब्रह्म ब्रह्मपतिर्ब्रह्मवर्चसमस्मिन्यज्ञे मयि दधातु स्वाहा सविता राष्ट्रं राष्ट्रपती राष्ट्रमस्मिन्यज्ञे मयि दधातु स्वाहा पूषा भगं भगपतिर्भगमस्मिन्यज्ञे मयि दधातु स्वाहा सरस्वती पुष्टिं पुष्टिपतिः पुष्टिमस्मिओ!यज्ञे मयि दधातु स्वाहा त्वष्टा रूपाणां रूपकृद्रुपपती रूपेण पशूनस्मिन्यज्ञे मयि दधातु स्वाहेति १ विराजौ संयाज्ये २ सहस्रवत्यौ वा--नू नो रास्व सहस्रवत्तोक-वत्पुष्टिमद्वसु । द्युअदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥ अत नो ब्रह्मन्नविष उक्थेषु देवहूतमः । शं नः शोचा मरुद्वृधोऽग्ने ३ दश दक्षिणा सहस्रं वा सहस्रं वा ४ १३ 5.13

इति कातीये श्रौतसूत्रे पञ्चमोऽध्यायः ५

पशिवज्या संवत्सरे प्रावृषि १ आवृत्तिमुखयोर्वा २ गृहेषु ३ यूपाहुतिं जुहोति चतुर्गृहीतं स्रुवेण वोरु विष्णविति ४ आज्यशेषमादाय सतक्षा गच्छति यूपम् ५ अभिमृशत्यत्यन्यानिति ६ प्राङ् तिष्ठन्नभिमन्त्रयते वा ७ पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वशकलशाखं मध्याग्रोपनतमव्रणम् ८ अभावे खदिरबिल्वरौहितकात् ९ खदिराऽभावे सोम इतरान् १० स्रुवेणोपस्पृशति विष्णवे त्वेति ११ ओषध इति कुशतरुणं तिरस्कृत्य स्वधित इति परशुना प्रहरति १२ प्रथमशकलं निदधाति १३ अनक्षस्तंभं वृश्चति १४ एकजम् १५ द्यां मा लेखीरिति पतन्तमभिमन्त्रयते १६ न दक्षिणा पतेत् १७ अयं हि त्वेति शोधनम् १८ अभिमन्त्रणशेषो वाऽविशेषोपदेशात् १९ अतस्त्वमित्याव्रश्चने जुहोति २० यूपे वा तत्संस्कारात् २१ स्थाणो श्रुतेश्च २२ परिवास्याऽच्छेदनं पुनः २३ त्र्! यरत्निश्चतुरत्निर्वा २४ एकारत्निप्रभृतीनेके २५ अष्टाश्रिं करोत्युपरवर्जम् २६ अग्राच्चषालं पृथमात्रमष्टाश्रि मध्यसङ्गृहीतम् २७ द्व्यङ्गुलं त्र्! यंगुलं वा तर्द्माऽतिक्रान्तं यूपस्य २८ पञ्चारत्निः पञ्चदशपर्यन्तः सोमे दशसप्तचतुर्दश-वर्जमपरिमितो वा २९ सप्तदश वाजपेये ३० एकविंशतिरश्वमेधे ३१ यथाकायं स्थविमा ३२ वेदिं करिष्यन् षड्ढोतारं पञ्चगहीतं मनसाऽनुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा द्यौष्पृष्ठमन्तरिक्षमात्माङ्गैर्यज्ञं पृथिवीं शरीरैर्वा-चस्पतेऽच्छिद्र या वाचाऽच्छिद्र या जुह्वा दिवि देवा वृधं होत्रामैरयन्त्स्वाहेति ३३ १ 6.1

वेदिं करोति १ वरुणप्रघासवत्स्फ्याद्याग्निनिधानात् २ एकमिध्मेन प्रणयति ३ व्रतोपायनप्रणीताऽऽज्यभागभागाऽवदानपूर्णपात्रविष्णुक्रमान् कुर्याद्धविर्यज्ञविधे ४ परिस्तरणपात्रसंसादनप्रोक्षणाऽज्यनिर्वपणाधिश्रय-णानि कृत्वोत्तरपरिग्रहादि करोत्याऽज्यासादनात् ५ सपृषदाज्य-माज्यग्रहणम् ६ बर्हिषि प्लक्षशाखा स्तृणाति ७ देवस्य त्वेत्यभ्रिमादाय यूपावटं परिलिखति इदमहमित्याहवनीयस्य पुरस्तादन्तर्वेद्यर्द्धम् ८ उपरसम्मितं खनति ९ प्राचः पांसूनुद्वपति १० तदग्रेण यूपं प्राञ्चं निदधाति ११ कुशमुष्टिमुपरि तस्मिन् १२ प्रथमशकलं च १३ अग्रमुत्तरेण चषालम् १४ यवोऽसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रम् १५ प्रोक्षामीति सर्वत्र साकाङ्क्षत्वात् १६ अवटे शेषमासिञ्चति शुन्धन्तामिति १७ बर्हिषि प्राञ्च्युदञ्चि च प्रास्यति पितृषदनमसीति १८ प्रथमशकलं चाऽग्रेणीरसीति १९ स्रुवेणाऽवटे जुहोति तूष्णीम् २० पुरस्तात्परिक्रम्या-ऽध्वर्युर्यजमानो वा यूपमनक्त्युदङ् उपविश्य २१ २ 6.2

यूपायाऽज्यमानायाऽनुवाचयति १ देवस्त्वेत्यनक्ति २ चषालमुभयतः ३ अक्तं प्रतिमुञ्चति सुपिप्पलाभ्य इति ४ सोपरमग्निष्ठादेशमवत्वा परि-व्ययणदेशं समन्तं

परिमृश्याऽध्वर्युर्नाऽवसृजेदापरिव्ययणात् ५ उच्छ्रीय-माणायाऽनुवाचयति ६ द्यामग्रेणेत्युच्छ्रयति ७ या त इति मिनोत्यग्निष्ठा सम्प्रत्याहवनीयम् ८ ब्रह्मवनि त्वेति पांसुभिः पर्यूहति ९ ब्रह्म दृंहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूहति १० समं भूमि कृत्वाऽद्भिरुपसिच्य विष्णोः कर्माणीति वाचयति यूपमन्वारब्धम् ११ तद्विष्णोरिति चषाल-मीक्षमाणम् १२ परिवीयमाणायाऽनुवाचयति त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति परिवीरसीति १३ संसृज्याऽन्य-तरस्यामन्तं प्रवेशयति १४ यूपशकलमस्यामवगूहत्युत्तरेणा-ऽग्निष्ठां दिवः सूनुरसीति १५ बहुषु यथास्वम् १६ उपावीरसीति तृणमादाय तेन पशुमुपस्पृशत्युप देवानिति १७ छागं मन्त्राऽम्नानात् १८ पन्नदव्यङ्गम् १९ यथामन्त्रवर्णं प्रोक्षणे २० नाऽचोदितत्वात् २१ अग्निं मन्थत्याहोमात्करोति २२ उपाकरणमन्थने वा २३ द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वाऽन्तरा शृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति २४ देवस्य त्वेति यूपे २५ ऐन्द्रा ग्नः सौर्यः प्राज्यापत्यो वा यमिच्छेत् २६ अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षति २७ अपां पेरुरित्यारय उपगृह्णाति २८ आपो देवीरित्यधस्तादुपोक्षति २९ ३ 6.3

इध्मप्रैषादि करोत्याप्रयाजेभ्यः १ उत्तराघारमाघार्यं पशुं पूर्वं समनक्ति ललाटांऽसश्रोणिषु सन्त इति प्रतिमन्त्रम् २ प्रवृत्त्य होतारमाश्राव्याऽह अग्निर्ह दैवीनां विशां पुरएताऽयं यजमानो मनुष्याणां सुन्वन्निति सुत्ये तयोरस्थूरि गार्हपत्यं दीदयच्छतं हिमाद्वायू राधांसीत् सम्पृञ्चानावसम्पृञ्चानौ तन्व इति ३ मैत्रावरुणाय दण्डं प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामि इति औदुम्बरं यजमानमुखमात्रम् ४ दीक्षितदण्डं सोमे ५ क्रीते वा ६ एकादश प्रयाजा अनुयाजाश्च ७ समैत्रावरुणे प्रेष्येत्याह यजस्थाने वचने ८ दशेष्ट्वा प्रयाजानाह शासमाहरेति ९ स्वरुमा-दायाऽक्त्वौभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाऽक्ताविति १० स्वरुमवगुह्याऽसिं प्रयच्छन्नाहैषा ते प्रज्ञाताऽश्रिरस्त्विति ११ सादयित्वा स्रुचौ चात्वालमुत्तरेण शामित्रायोल्लिखति १२ ४ 6.4

पर्यग्नयेऽनुवाचयति १ आहवनीयोल्मुकमादायाऽग्नीत् त्रिः समन्तं पर्येति पश्वाज्यशामित्रदेशयूपचात्वालाऽहवनीयात् २ आज्यपशुशामित्रान्वा ३ प्रतिप्रास्योल्मुकं तावत्प्रतिपर्येति ४ पुनरादायोदङ्ग प्रतिपद्यते ५ पशुश्चा-ऽन्वक् ६ प्रतिप्रस्थाताऽन्वारभते एनं वपाश्रपणीभ्यां कार्ष्मर्यमयीभ्यां विशाखाऽविशाखाभ्याम् ७ तमध्वर्युर्यजमानोऽध्वर्युम् ८ वेदितृणे-ऽध्वर्युरादायाऽश्राव्याऽह उपप्रेष्य होतर्हव्या देवेभ्य इति ९ रेवति यजमान इति वाचयति १० शामित्रं नाऽतीयात् ११ शामित्रेऽग्निं निदधाति १२ निर्मन्थ्यमेके १३ पश्चात्तृणमुपास्यति वर्षो वर्षीयसीति १४ तस्मिन्नेनं निघ्नन्ति प्रत्यक्शिरसमुदक्पादम् १५ प्राक्शिरसं वा १६ सङ्गृह्य मुखं

तमयन्त्यवाश्यमानम् १७ वेष्केण वा १८ एत्याऽहवनीयमावृत्याऽसते १९ संज्ञपयाऽन्वगन्नित्येव ब्रूयात् २० स्वाहा देवेभ्य इति जुहोति २१ संज्ञप्तः पशुरिति प्रोक्ते शेतां नु मुहूर्तमित्याहऽसोमे २२ देवेभ्यः स्वाहेति जुहोति २३ न वैते जुहुयात् २४ वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति माहिर्भू इति २५ प्रतिप्रस्थातः पत्नीमुदानयेत्याह नेष्टरिति सोमे २६ ५ 6.5

पान्नेजनहस्तां वाचयति नयन्नमस्त आतानेति १ पशोः प्राणाञ्छुन्धति पत्नी २ मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान्त्संहत्य वाचं ते शुन्धामीति प्रतिमन्त्रम् ३ शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चतो मनस्त इति शिरः ४ यत्ते क्रूरमित्यङ्गानि ५ शमहोभ्यः इति पश्चात् पशोर्निषिञ्चतः ६ उत्तानं पशुं कृत्वाऽग्रेण नाभिं तृणं निदधात्योषध इति ७ स्वधित इति प्रज्ञातयाऽभिनिधाय छित्वाऽग्रं सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामिति ८ निरस्तमित्यपास्यति ९ इदमहमित्यभितिष्ठति यजमानः १० वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णौति घृतेन द्यावापृथिवीति ११ परिवास्य चात्वालेऽवसिच्य शामित्रे प्रतपति १२ शामित्रैक-देशमाहवनीये प्रास्यत्यग्नीत् १३ तृणाग्रं चाऽध्वर्युर्वायो वेरिति १४ उत्तरतस्तिष्ठन् प्रतप्य वपामन्तरा यूपाऽग्नी हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति परीत्य १५ वपां स्रुवेणाऽभिघारयति अग्निराज्यस्य इति १६ स्तोकेभ्योऽनुवाचयति १७ शृतायां शृता प्रचरेत्याह प्रतिप्रस्थाता १८ स्वाहाकृतिभ्यः प्रेष्यति १९ हुत्वा वपामभिघारयति पृषदाज्यं ध्रुवां प्रथममाज्यभागौ चेत् २० अत्राऽज्यभागौ कुर्वन् २१ वपया चरिष्य-न्नुपस्तीर्य हिरण्यमवधाय वपामवद्यन्नाह इन्द्रा ग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहि इति २२ हिरण्यमवधाय द्विरभिघारणं सोमे २३ आश्रा-व्याऽह इन्द्रा ग्निभ्यां छागस्य वपां मेदः प्रेष्य इति २४ प्रस्थितमिति च प्रसुते २५ हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरां स्वाहाकृत इति २६ चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहत इति २७ ६ 6.6

विशास्ति पशुमन्यः १ ऋत्विजां वैकोऽप्रक्लृप्तत्वाच्छामित्रे २ उपगाऽदर्शनाच्च ३ विक्रयी त्वन्यः शूद्र संयोगात् ४ अङ्गान्यवद्यत्यभञ्जन् ५ हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि ६ दक्षिणसक्थिपूर्वनडकं गुदतृतीयाऽणिष्ठं सव्या श्रोणिरित्यौपभृतानि ७ वर्षिष्ठमुपयड्भ्यः ८ अवदानकाले प्रभागः ९ वनिष्ठुजाघनी चाऽवद्यति १० क्लोमप्लीहाऽध्यूध्नीपुरीततं चेच्छन् ११ उदरमेदोऽवशिष्टं गुदे प्रास्यति कृशश्चेत् १२ श्वभ्र ऊवध्यमवधाय तस्मिंल्लोहितं रक्षसामिति १३ शूले हृदयं प्रतृद्य शामित्रे श्रपयति १४ पशुं चोखायाम् १५ पशुदेवतायै पुरोडाश एकादशकपालः १६ अग्नी-षोमीयो वा विशेषोपदेशात् १७ अत्रैव

हविष्कृदाह्वानमिज्यैकत्वात् १८ अवद्यन्नाह इन्द्रा ग्निभ्यां पुरोडाशस्याऽनुब्रूहि इति १९ उपभृति चाऽवद्यति स्विष्टकृद्वत् २० इन्द्रा ग्निभ्यां पुरोडाशम् इति प्रेष्यति २१ हुत्वा समा-नीयाज्ऽग्नये प्रदाय २२ सगुणस्थानेऽगुणः २३ सर्वविकार एकत्वात् २४ यथाऽम्नातं वा वचिभेदात् २५ इडामवद्यत्यक्रियाऽन्यस्य समा-नार्थत्वात् २६ न चोदनाभेदात् २७ कालगुणभेदाच्च २८ पशुर्दक्षिणा धेनुर्वरो वा मार्जिते २९ ७ 6.7

शमितारं शास्ति त्रिः प्रच्यावयतात् त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुताद्यत्वा पृच्छाच्छृतं हविः शमिता३ रिति शृतमित्येव ब्रूतान्न शृतं भगवो न शृतं हीति १ त्रिःप्रच्युते हृदयं प्रवृह्योत्तमं करोति २ शूलं चाऽभूमौ ३ जुह्वा पृषदाज्यस्याऽदायोपनिष्क्रम्य पृच्छति शृतं हविः शमिता३ रिति त्रिरभिक्रामन् ४ प्रोक्ते तद्देवानामित्याहोपांशु ५ सन्ते मन इति हृदयमभिघार्य सर्वम् ६ पश्वसी वपावद्धुत्वा दक्षिणतः प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति ७ जुहूपभृतोरुपस्तृणीते वसाहोमहवन्यां पात्र! यां च मनोतायै हविषोऽवदीयमानस्याऽनुब्रूहीत्युक्ते स्रुचोरवद्यति यथोक्तं द्विर्द्विः ८ अशेषे गुदतृतीये ९ वपावद्धिरप्यम् १० रेडसीति वसां गृहीत्वा द्विरभिधार्य प्रयुतमिति पार्श्वेन संसृजत्यसिना वा ११ शेषमिडापात्र! या-मासिच्य क्रोडमनस्थीनि च प्रास्यति श्रोणिवर्जम् १२ जाघनीगुदं निधायाऽह इन्द्रा ग्निभ्यां छागस्य हविषोऽनुब्रूहि इति १३ आश्राव्या-ऽहेन्द्रा ग्निभ्यां छागस्य हविः प्रेष्येति १४ प्रस्थितमिति च प्रसूते १५ अर्द्धर्चाऽन्तरे याज्यायै वसैकदेशं जुहोति घृतं घृतपावन इति १६ दैवतं हुत्वा प्रदक्षिणमावृत्य जुह्वा पृषदाज्यस्योपघ्नन्नाह वनस्पतयेऽनुब्रूहि इति १७ आश्राव्याऽह वनस्पतये प्रेष्येति १८ हुत्वा समानीय सौविष्टकृतम् १९ प्रत्येत्य वा दिशो व्याघारयति वसाशेषेण वाजिनवत् २० सर्वं जुहोति २१ ८ 6.8

ऐन्द्रः प्राण इति पशुं संमृशति १ अवदाय वेडां प्राक्प्रदानात् २ इडामादधाति ३ उपहूतायां वनिष्ठुमग्नीधे ४ अध्यूध्नीं होत्रे ५ अवान्तरेडा वा ६ मार्जिते प्रेष्यति अग्नीदौपयजानङ्गारानाहरोपययष्टरुपसीद ब्रह्मन्प्रस्थास्यामि समिधमाधायाऽग्निमग्नीत्संमृड्ढीति ७ शामित्रादङ्गा-रानाहृत्य वेदिश्रोण्यां निवपत्युत्तरस्याम् ८ आग्नीध्रीयाद्वा सोमे होतृधिष्ण्ये ९ प्रतिप्रस्थातोपयजतिगुदतृतीयस्य प्रच्छेदमनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रम् १० प्रतिवषट्कारं हुत्वा मनो म इति मुखोपस्पर्शनम् ११ अनुयाजान्ते स्वरुं जुहोति दिवं ते धूम इति १२ पशुदेवतावनस्पतिभ्यां स्रुग्व्यूहनम् १३ जाघन्या पत्नीसंयाजनम् १४ उत्तानाया देवानां पत्नीभ्योऽवद्यति १५ इडां च १६ परिवर्त्याऽग्नय गृहपतयेऽग्नीधे च १७ आज्येन पूर्वे १८ सर्वा वा जाघन्याऽविशेषात् १९ ९ 6.9

बर्हिर्हुत्वाऽपो गच्छन्ति हृदयशूलमादाय १ आहवनीयं वोपस्थाय व्रतादीनि चेत् २ अभ्यवेत्य शुष्काऽर्द्रे सन्धौ हृदयशूलमुपगूहति शुगसि तमभिशोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मो माऽपो मौषधीरिति च ३ ग्लायन्नुदपात्रं निषिच्य पूर्वेण यूपं यथोक्तमुपगूहति ४ धाम्नो धाम्नः सुमित्रिया न इत्युपस्पृशन्त्यपः ५ उपगूहनशेषो वा पूर्वः ६ अभिमन्त्रणं वोत्तरेण ७ न सोमेऽनूबन्ध्यावर्जम् ८ वरुणप्रघासवत्समिदाधानम् ९ व्रतं विसृज्याऽपराग्नीनां पूर्वे चतुर्गृहीतं यूपाहुतिवत् १० स विहारोऽतः ११ समारूढनिर्मथिते वा १२ यथोत्साहं दद्यादस्याम् १३ अग्निं प्रणीय सदोहविर्द्धानाऽग्नीध्रहोतृधिष्ण्यान् यथोक्तं गृहीत्वाऽज्यान्याग्नीध्रप्रणयनमग्नीषोमीयदर्शनात् १४ न सोमाऽर्थत्वात् १५ प्रसङ्गाद्दर्शनम् १६ दर्वि-होमाः पौर्णमासधर्मा जुहोत्यविशेषात् १७ जुहूदर्शनाच्च १८ तूष्णी-मनर्थलुप्ताः १९ एकाग्नयः २० अप्रयाजा अननुयाजा असामिधेनीकाः २१ अनिगदाः २२ प्रतिनिगद्य होमाः २३ स्वाहाकारप्रदानाः २४ परतन्त्रोत्पत्तयो जुहोतिमात्राः २५ पाकयज्ञेष्ववत्तस्याऽसर्वहोमः २६ हुत्वा शेषप्राशनम् २७ अग्निहोत्रे तदस्य पाकयज्ञस्येवेति श्रुतेः २८ अग्नीषोमीयात्पशुषु २९ शाखानियोजनम् ३० वपां हुत्वा त्रीणि पञ्च सर्वाणि वाऽवद्यति ३१ सर्वाऽभावे शेषात्स्विष्टकृतः ३२ स्थालीपाकेन सह प्रदानम् ३३ पूर्णपात्रो दक्षिणा वरो वा वरो वा ३४ १० 6.10

इति कातीये श्रौतसूत्रे षष्ठोऽध्यायः

दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेति श्रुतेः १ सोमेन वोपक्लृप्तसोमः २ आधानस्य सोमप्राधान्यात् ३ नाऽविशेषात् ४ वसन्तेऽग्निष्टोमः ५ ऐन्द्राग्नं पुनरुत्सृष्टमालभ्य द्विपुरुषाऽसोमपीथिनः ६ षोडशर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्यु ब्राह्मणाच्छंसि प्रस्तोतृ मैत्रावरुणप्रतिप्रस्थातृ पोतृप्रतिहर्त्रच्छावाक नेष्ट्रग्नीत्सुब्रह्मण्य ग्रावस्तुदुन्नेतॄन् वृणीते ७ चतुरो वाऽऽद्याँस्तत्पुरुषा इतरे यथावेदम् ८ ब्राह्मणाच्छंस्यग्नीत्पोतारो ब्रह्मणः ९ देवयजनं जोषयन्ते १० उच्चतमं सममविभ्रंशि ११ अभितो देवयजनमात्रदेशं पुरस्तादवर्जम् १२ प्राक्प्रवण-मुदग्वा यत्किंञ्चाऽनूचानर्त्विजः १३ उद्धतौषधिमूलेऽपरेऽन्ते विमितं कु-र्वन्ति १४ प्राग्वंशम् १५ पुरस्तादुच्चम् १६ प्रतिदिग्द्वारम् १७ उदग्वर्जं वा १८ शालां वा १९ परिवृते चोत्तरापरे २० दीक्षाप्रभृति शुक्लपक्षे पञ्चमीं सप्तमीं वा प्रसुतः २१ कालातिक्रमे नियतक्रिया प्राप्तकालत्वात् २२ न समत्वात् २३ द्वादशदीक्षा अपरिमिता वा २४ पुण्याहे दीक्षा क्रयः प्रसव उत्थानम् २५ प्रक्रमोत्थाने विरोधे २६ न वाऽचोदित्वात् २७ दीक्षासु यूपच्छेदनं यूपाहुतिं प्राग्घुत्वा यूपान्ते वाऽग्निं मथित्वा दीक्षितरयाऽग्निहोमप्रतिषेधश्रुतेः २८ उच्छ्रयणकाले वोभयं होमच्छेदने सन्निधेः २९ समारोहयाऽग्नी शालास्तम्भं पूर्वार्धं गृहीत्वाऽरणिपाणि-राहेदमगन्मेति ३० १

7.1

शालायां राजानं निदधात्याहृतश्चेत् १ प्राक् क्रयादन्नमुपहरन्त्यस्मै हविष्यममांसम् २ अग्निं विहृत्य सप्तसु प्रक्रमेष्वर्द्धव्यामे च साऽग्निचित्ये ३ अपराह्णेऽश्नातीष्टमुपपन्नं वा न वा ४ क्रत्वर्थमपदिश्याऽन्यस्मा उत्तरे परिवृत उदकुम्भवत्यप्सुदीक्षा ५ नापित उत्तरत उपतिष्ठत नखानि निकृन्तत्यङ्गुष्ठप्रभृतीनि दक्षिणहस्तस्य प्रथमम् ६ दक्षिणं गोदानं वितार्योनत्तीमा आप इति ७ यूपवत्कुशतरुणम् ८ क्षुरेण चाऽभिनिधाय ९ छित्वोदपात्रे प्रास्यति १० एवमुत्तरं तूष्णीम् ११ नापिताय क्षुरं प्रयच्छति १२ तेन केशश्मश्रु वपति १३ आपो अस्मानिति स्नात्वोदिदाभ्य इत्युत्क्रामत्युत्तरपूर्वार्धम् १४ क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतं चेदद्भिरभ्युक्ष्य १५ स्नातवस्यं वाऽमौत्रधौतं विचितकेशं प्रसारितदशं दीक्षातपसोरिति १६ न नीविं कुरुते १७ एवं प्रतिप्रस्थाताऽपरस्मिन्परिवृते पत्नीं तूष्णीम् १८ वपनं वा १९ धेन्वनडुहयोर्नाऽश्नीयात् २० पुरुषधर्मो वाऽसम्भवात् २१ अंसलभोजनं वा २२ प्रपाद्याऽऽग्नावैष्णव एकादशकपालः २३ आदि-त्येभ्यो वा चरुः २४ प्राक् समिष्टयजुषः करोति २५ समिष्टयजुर्वर्जं वा २६ उपांशु चरन्ति प्रागग्नीषोमीयात् २७ वागन्तेन वा दीक्षणीयां नीचैस्तरां नीचैस्तरामितरे २८ उपांशूपसदः २९ शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्ष्णोऽध्यनुलोमं सपादको महीनां पयोऽसीति ३० वृत्रस्येत्यक्ष्यावनक्ति त्रैककुदाञ्जनेन ३१ अभावेऽन्यत् ३२ द्विर्दक्षिणं त्रिरूत्तरं पराक् ३३ सकृत्सकृन्मन्त्रः ३४ शरेषीकया साऽग्रया ३५ २ 7.2

कुशपवित्रश्चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रे णेति सर्वत्र द्विरुपरि नाभ्युन्मृज्य प्रदक्षिणं सकृदवाङ् १ एकेन त्रिभिः सप्तभिर्वा २ एकशतेन वा राजसूये ३ आ वो देवास इति वाचयति ४ स्वाहा यज्ञमित्यङ्गुलीरञ्चते नाना हस्तयोः ५ एवं शेषं प्रतिमन्त्रम् ६ उत्तमेन मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतः ७ अङ्गुष्ठौ तत्सहिते चोत्सृजति ८ वाग्यतं प्रवेशयत्याहवनीयगार्हपत्यावन्तरेण ९ सोऽस्य सञ्चर आ प्रसवात् १० एवं प्रतिप्रस्थाता पत्नीमभ्यञ्जनादि तूष्णीम् ११ अपरेण वा प्रवेशयति १२ औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाऽऽकूत्या इति प्रतिमन्त्रम् १३ तृतीयं जपत्येव १४ पञ्चमं जुह्वां ध्रौवमासिच्य द्विश्च स्थाल्याः स्रुवेण तृतीयं स्रुवमभिपूरयति विश्वो देवस्येति १५ एतामेव वा पूर्णां जुहुयात् १६ आहवनीयं दक्षिणेन कृष्णाजिने मांससंहिते स्यूतान्ते तर्ह्मसु पश्चादासञ्जनवती निदधाति १७ एकं चेत्पश्चात्पाददद्विगुणम् १८ दक्षिणं जान्वाच्याऽस्ते पश्चादेनयोः १९ शुक्लकृष्णसन्धिमालभत ऋक्सामयोरिति २० दक्षिणजानुनाऽरोहति शर्माऽसीति तेनाऽस्तेऽपरेऽन्ते २१ मेखलां बध्नीते वेणिं त्रिवृतं शणमुञ्जमिश्रामन्तरा वासस ऊर्गसीति २२ नीविं कुरुते सोमस्य नीविरिति २३ शिरः प्रोर्णुते विष्णोः शर्मेति २४ कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते २५ तया कण्डूयनम् २६ उपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्र स्य योनिरिति २७ भूमौ चोल्लि-खति सुसस्या इति २८ ३ 7.3

मुखसम्मितमौदुम्बरं दण्डं प्रयच्छति १ उच्छ्रयस्वेत्येनमुच्छ्रयति २ तं दक्षिणत उपधत्ते ३ अत्र वा मुष्टिकरणवाग्यमने ४ एवं प्रतिप्रस्थाता पत्नीं तूष्णीं युगपन्मेखलादि ५ योक्त्रेण वा ६ जालं वा शिरसि त्रिपर्यायम् ७ पृथुमुखो यज्ञियवृक्षशङ्कुः कण्डूयने ८ ओल्लेखनात्करोति मेखलादि चेत् ९ कृष्णाजिनादि चेद्दण्डान्तम् १० अन्यो दीक्षितोऽयं ब्राह्मण इत्याह त्रिरुच्चैः ११ ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः १२ आऽस्तमयाद्वाचं यच्छति १३ अस्तमिते दीक्षित वाचं विसृजस्व पत्नि वाचं विसृजस्वेति त्रिराह १४ अग्निमभ्यावृत्य व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्त्वाऽग्निर्ब्रह्मेति च सकृत् १५ भूर्भुवः स्वरिति वा १६ अत ऊर्ध्वं-मामुष्टिविसर्गादनस्तमितेऽनुदिते च त्रिराह दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति १७ यथोक्तं विसर्जनम् १८ व्रतदुघे दोहयति १९ तत्क्षीरव्रतौ भवतः २० प्रथमे व्रते व्रीहियवयोरन्यतरमावपत्युभावेके २१ तद्व्रतमदोहे २२ सर्वौषधं सर्वसुरभिचैके २३ गार्हपत्ये दीक्षितस्य श्रपणं दक्षिणाग्नौ पत्न्याः २४ यवागू राजन्यस्याऽमिक्षा वैश्यस्य २५ व्रतं प्रयच्छत्य-नुत्सिक्तमपरात्रे सायन्दोहमपराह्ण प्रातर्दोहम् २६ दैवीं धियमिति व्रता-योपस्पर्शनं स्वासने २७ ये देवा इति व्रतयत्यमृन्मये २८ पत्नी लौहे २९ श्वात्राः पीता इति नाभिमालभते ३० मेक्ष्यन् कृष्णविषाणाया लोष्टं किंचिद्वाऽदत्त इयं त इति ३१ अपो मुञ्चामीति मेहति ३२ पृथिव्या सम्भवेत्यात्तं निदधाति ३३ अग्ने त्वमित्युक्त्वा स्वपित्यधः प्राङ् दक्षिणतः ३४ अग्निमभ्यावृतं विबुद्धमस्वप्स्यन्तं पुनर्मन इति वाचयति ३५ ४ 7.4

त्वमग्न इत्याह क्रुध्वाऽव्रत्यं वा व्याहृत्य १ लब्धमालभ्य वाचयति रास्वेयदिति २ अशक्येऽभिमन्त्रणम् ३ शूद्र सम्प्रवेशसम्भाषाप्रत्युत्था-नाऽभिवादनोदकावायवर्षाणि वर्जयेत् प्रागवभृथात् ४ परिह्वालं वदति ५ विचक्षणचनसितवतीं वाचम् ६ शालासनाऽस्वप्नौ सन्धिवेलयोः ७ वेद्यां सुत्यासु ८ अप्रायश्चित्तमपराधे ९ इतरेतरस्मिन्वोपहवमिच्छेरन् १० पत्न्यामेकदीक्षी ११ दीक्षान्ते प्रायणीयमदित्यै चरुं निर्वपति १२ आज्यभागाविष्ट्वाऽऽज्येन देवताश्चतस्रो यजति पथ्यास्वस्तिमग्निं सोमं सवितारं च १३ चरुमेक्षणबर्हिर्निदधात्युदयनीयायै १४ सलेपं चरुं प्रमृष्टं मेक्षणम् १५ प्रक्षालयति वा चरुम् १६ अनुप्रहरतीतरे १७ त एवर्त्विजः १८ विप्रेतेष्वन्येऽपि १९ शंय्वन्तं भवति २० अन्तवचने पूर्वं प्राप्तेः २१ अविशेषश्रुतेः २२ उत्तरं वा प्रकृत्यनुग्रहाऽनुयाजप्रतिषेधाभ्याम् २३ ग्रहणादप्रवृत्तिः २४ सन्त्वराश्रुतेश्च २५ नित्यानुवादोऽनुयाजप्रतिषेधः २६ ५ 7.5

उपरवदेशे प्रतिप्रस्थाता रोहिते चर्मण्यानडुहे सोमं निवपति १ विक्रय्येनं विचिनोति कौत्सः शूद्रो वा २ ब्राह्मण उपास्ते ३ उदकुम्भश्च पुरस्तात् ४ शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति ५ बर्हिस्तृणेव हिरण्यं बद्ध्वाऽवदधात्येषा त इति ६ जूरसीति जुहोति ७ शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां तृणं निदधाति ८ सूत्रबद्धं हिरण्यं कुरुते ९ चतुर्गृहीतं गृहीत्वाऽन्वारभस्व यजमानेत्याह १० अपावृतद्वारे निष्क्रामतः ११ दक्षि-णेन द्वारं सोमक्रयणी तिष्ठत्यलक्षिताऽव्यङ्गाऽप्रवीताऽरज्जुबद्धा बभ्रुः पिङ्गला पिङ्गलाऽभावेऽरुणाऽरुणाऽभावे रोहिण्यश्येताक्षी १२ चिदसीत्येना-मभिमन्त्रयते १३ उदीचीं नीयमानामनुगच्छतो वस्व्यसीति १४ षट् पदान्यतीत्य सप्तमं पर्युपविशन्ति १५ हिरण्यमस्मिन्निधायाऽभिजुहो-त्यदित्यास्त्वेति १६ स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति १७ समुद्धत्य पदं स्थाल्यामावपत्यस्मे ते बन्धुरिति १८ अपः स्थाने निषिच्य यजमानाय पदं प्रयच्छति त्वे राय इति १९ मे राय इति यजमानः प्रतिगृह्णाति पदम् २० मा वयमित्यध्वर्युरात्मानं संस्पृशति २१ हृत्वा पत्न्यै पदं प्रयच्छति २२ नेष्टा तोत इत्येनां वाचयति २३ सोमक्रयण्या च समीक्ष्यमाणां समख्य इति २४ प्रक्षाल्य पाणी हिरण्यं बध्नीते-ऽनामिकायाम् २५ आप्यायनाऽभिषवांऽश्वदाभ्येषु च २६ ६ 7.6

प्रेष्यति च सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति १ अत्र वा निवपनम् २ शोभनं सोमोपनहनम् ३ उष्णीषाऽभावे सोमपर्याणहनाद् द्व्यङ्गुलं वोष्णीषायाऽवकृन्तति ४अध्वर्युर्यजमानो वा सोमोपनहनं हरत्यन्य इतरे ५ सोमं गच्छन्त्येष त इति वाचयति ६ प्राङ्पविश्याऽस्माकोऽसीति सोममालभते ७ न विचिनोत्यतस्तृणकाष्ठाऽपासनमेके ८ सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति प्राग्दशमुदग्वा ९ तस्मिन्त्सोमं मिमीते दशकृत्वोऽभित्यमिति १० सर्वाभिः प्रथमम् ११ अङ्गुष्ठप्रभृति चैकोत्सर्गम् १२ द्विः कनिष्ठिकया १३ एकोपचयं च १४ अञ्जलिना दशमम् १५ अन्यद्वाऽध्यावापश्रुतेः १६ अन्तान्त्सङ्गृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेति १७ अङ्गुल्या मध्ये विवृणोति प्रजास्त्वाऽनु प्राणान्त्विति १८ तं विक्रयिणे प्रयच्छति १९ ७

पञ्चकृत्वः सोमं पणते १ स आह सोमविक्रयिन् क्रय्यस्ते सोमो राजा इति २ क्रय्य इत्याह सोमविक्रयी ३ तं वै ते क्रीणानीति ४ क्रीणीहीत्याह सोमविक्रयी ५ कलया ते क्रीणानीति ६ भूयो वा अतः सोमो राजाऽर्हतीत्याह सोमविक्रयी ७ भूय एवातः सोमो राजाऽर्हति महांस्त्वेव गोर्महिमेत्यध्वर्युर्गोर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति ८ भूय एतेत्यतःप्रभृति चतुरावर्त्तयति ९ एकैकेनाऽन्ते पणते शफेन पदाऽर्द्धेन गवा १० ते क्रीणामीत्यन्ततः ११ प्रश्नाते प्रश्नान्ते १२ क्रीतः सोमो राजेत्यन्ते वयांसि प्रब्रूहीत्याह सोमविक्रयी १३ स आह चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्या इति १४ शुक्रं त्वेति हिरण्यमालभ्य वाचयति १५ सग्मे त इति सोमविक्रयिणं हिरण्येना-ऽभिकम्पयति १६ अस्मे त इति यजमानसहितं निदधाति १७ सोम-विक्रय्येतदादत्ते १८ अजां प्रत्यङ्मुखीमालभ्य वाचयति तपसस्तनूरिति १९ सव्येनाऽजां प्रयच्छन्मित्रोन इति दक्षिणेन सोममादायाऽगत उत्तिष्ठति वा २० दीक्षितोरौ दक्षिणे प्रत्युह्य वासो निदधातीन्द्र स्योरुमिति २१ स्वान भ्राजेति जपति सोमविक्रयिणमीक्षमाणः २२ अपोर्णुते दीक्षितः शिरः २३ पत्नी च २४ हिरण्यं सहसाऽच्छिद्य पृषता वरत्राकाण्डेनाऽहन्ति वा २५ ८ 7.8

गृहीतसोमं परि माऽग्न इति वाचयति १ उत्तरे च २ उदायुषेत्युत्थानं शीर्ष्णि सोमं कृत्वा पाणिमन्तर्द्धाय ३ प्रतिपन्थामित्यनोऽभ्येति दक्षिण-तस्तिष्ठञ्छन्नं समङ्गि धौतं प्रउगाच्चोद्धते फलके ४ कृष्णाजिन-मस्मिन्नास्तृणात्यदित्यास्त्वगिति ५ तस्मिन्त्सोमं निदधात्यदित्यै सद इति ६ अस्तम्भ्नाद् द्यामिति सोममालभ्य वाचयति ७ वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परितत्य कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरिति ८ एकं चेद् ग्रीवा अवकृत्य ९ अनड्वाहौ युनक्त्युस्रावेतमिति युग-पत्तद्वचनत्वात् १० भेदे मन्त्रावृत्तिः सान्निपातितत्वात् ११ ईषान्तरे

भूमिष्ठः सुब्रह्मण्यः पलाशशाखया प्राजति १२ पश्चात्परीत्याऽपालम्बं गृहीत्वा सोमाय क्रीतायाऽनुवाचयति पर्युह्यमाणायेति वा १३ दीक्षितश्चाऽन्वारभते १४ त्रिरुक्तायां प्राङ्यात्वा दक्षिणाऽवर्त्य शालां गच्छन्ति १५ भद्रो म इति वाचयति १६ सुब्रह्मण्यां चाऽह्वयति सुब्रह्मण्यॐ सुब्रह्मण्योमिति त्रिरुक्त्वा सकृन्निगदं यावदहे सुत्या तथाऽऽह १७ शालां पूर्वेण प्रति-प्रस्थाताऽग्नीषोमीयं पशुमादाय तिष्ठति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम् १८ नमो मित्रस्येत्येनमालभ्य वाचयति १९ चरति पशौ वाचनमेव २० आहवनीयाच्छोल्मुकमाहृत्यैके २१ समीपेऽन उपस्था-प्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमिति २२ शम्ये चोद्वृहति वरुणस्य स्कम्भसर्जनी स्थ इति २३ औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्रा-ऽङ्गीभूतामाहरन्ति चत्वारः २४ अभिमृशत्येनां वरुणस्य ऋतसदन्यसीति २५ कृष्णाजिनमस्यामास्तृणाति वरुणस्य ऋतसदनमसीति २६ तस्मिन्त्सोमं निदधाति वरुणस्य ऋतसदनमासीदेति २७ शालां प्रवेशयन्ति दीक्षितसञ्चरेण २८ या त इति वाचयति २९ आहवनीयं दक्षिणेन स्थापयन्ति ३० उदपात्रमुपनिनयन्त्येके ३१ ९ 7.9

इति कातीये श्रौतसूत्रे सप्तमोऽध्यायः ७

आतिथ्यं निर्वपति वैष्णवं नवकपालम् १ पत्न्यन्वारब्धस्तूर्णमेकविमुक्ते वा निर्वपेदग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रम् २ सावित्रनिवृत्तिः श्रुति-विरोधाभ्याम् ३ अग्न्यन्वाधानव्रतोपयनाऽऽरण्यभोजनदानब्रह्मवरणादीनि दीक्षणीयाप्रभृति प्रागुदवसानीयायाः सोमे कृतत्वात् ४ पत्नीसन्नहनं च सयोक्त्रायाः ५ यजमानभागश्च भक्षप्रतिषेधात् ६ न कर्मगुणत्वात् ७ उपसर्जनीरधिश्रयाति मदन्तीश्च व्रतवत् ८ आमुष्टिविसर्गादुदकार्थस्ततः ९ कार्ष्मर्यमयाः परिधय आश्वबालः प्रस्तर ऐक्षव्यौ विधृती बर्हिश्च १० एतदेवाऽग्नीषोमीयोपसत्स्वपि चतुष्टयम् ११ आसाद्याऽग्निमन्थनमाहो-मात्करोति १२ इडान्तं भवति १३ ध्रौवं व्रतप्रदाने गृहणात्यापतय इति १४ द्विश्च स्थाल्याः स्रुवेण तनूनप्त्रे शाक्वरायेति शक्वन ओजिष्ठायेति १५ गृहणामीति सर्वत्र साकाङ्क्षत्वात् १६ पूर्वशेषौ वोत्तरौ १७ प्रतिपुरुषं च ग्रहणमाज्यानि गृहणाना इति श्रुतेः १८ तानूनप्त्रमेतत् १९ दक्षिणस्यां वेदिश्रोणौ निधायाऽवमृशन्त्यृत्विजो यजमानश्चाऽनाधृष्टमिति २० अद्रो हस्तेभ्यो न सतानूनप्त्रिणे द्रो ग्धव्यमिति श्रुतेः २१ १ 8.1

पल्यङ्गय निदधात्यपिधायाऽमृन्मयेन १ अपराहणे व्रतमिश्रं दीक्षिताय प्रयच्छति २ बृहुषु गृहपतये ३ अग्ने व्रतपा इत्याहवनीये समिधमादाय मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते ४ पत्नी च गार्हपत्ये तूष्णीम् ५ मदन्तीरुपस्पृश्य यजमानषष्ठाः सोममाप्याययन्त्यंशुरंशुरिति ६ आज्यमालभ्योपस्पृशेदपः सोममालिप्स्यमानस्तथा विपर्यस्य ७ प्रत्येत्य प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति ८ व्यूहनपरिध्यञ्जने कृत्वैके ९ समुल्लुप्य प्रस्तरमक्त्वा परिधींश्चाऽदायाऽहाग्नीन्मदन्त्याप इति १० मदन्तीत्यग्नीत् ११ ताभिरेहीति ब्रुवन्नध्यध्याहवनीयं हृत्वा-ऽभ्युक्ष्याऽग्नीधे प्रयच्छति निधानाय १२ सुब्रह्मण्यां च प्रेष्यति १३ प्रवर्ग्योपसदावतः १४ उपसदेव वाऽप्रवर्ग्ये १५ प्रणीताद्युपसत् १६ हविष्कृतमाहूयाऽनाहननमपेषणे तीक्ष्णार्थत्वात् १७ स्याद्वा धर्ममात्रत्वात् १८ श्रुतेश्च १९ परिस्तरणपात्रसंसादनप्रोक्षणाऽज्यनिर्वपणाऽधिश्रयणानि कृत्वा स्फ्यादि करोति २० बर्हिषः प्रच्छेदं हरति २१ मदन्तीरिति वा प्रेष्यति २२ मात्रावदिध्माबर्हिः २३ स्रुवतृतीयाः स्रुचः संमाष्टि २४ अष्टगृहीतं जुहवां चतुरुपभृति २५ यथाप्रकृति वा २६ एकवृत्स्तरणम् २७ आज्यस्थाली ध्रुवार्थे २८ स्रुवाघारमाघार्य संमृष्ट आश्राव्य सीद होतरित्येव ब्रूयात् २९ प्रसूतोऽतिक्रमन्नग्नयेऽनुवाचयति ३० अर्द्धं हुत्वा सोमाय विष्णवे समानीय ३१ सादयित्वा स्रुचौ सोमाऽप्यायनाद्या-सुब्रह्मण्याप्रैषात् ३२ अक्त्वा प्रस्तरमुपसदं जुहोति स्रुवेण या त इत्ययः-शयामन्वारब्धे ३३ द्विरेकया चरति ३४ सुसायं सुपूर्वाहणे च ३५ एवमितरे अन्वहं रजःशयां हरिशयां च ३६ एकाहस्व्युपसत्कः ३७ द्व्डश वा ३८ २ 8.2

त्रिस्तनं प्रथमायां दोहयति १ एकापचयेनोतरयोः २ विपर्यस्य वाऽनग्निचित्ये ३ एवं प्रवृद्धौ समं विभजेत् ४ स्वस्थानविवृद्धिः ५ औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य वेदिं मिमीते ६ पूर्वार्द्ध्यात्स्तम्भात्पुरस्तात् त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्तःपात्यः ७ तस्मात्पुरस्तात्षट्त्रिंशति ८ दक्षिणोत्तरौ च पञ्चदशसु पञ्चदशसु ९ अर्धसप्तदशेषु वा १० पूर्वार्द्ध्याच्च द्वादशसु द्वादशसु ११ पृष्ठ्यामायम्य स्फ्यादि करोति खादिरेणाऽच्छादनात्

१२ उपरवदेशात्स्तम्बयजुर्हरति १३ उत्तरांसात्पश्चादध्यर्धे पदे चात्वालम् १४ यथोक्तं वा १५ प्रातरुपसदौ समस्य पौर्वाह्णिक्या प्रचर्याऽर्द्धव्रतं प्रयच्छति १६ सर्वं वाऽग्नौ १७ उभाभ्यां चरिते प्रवर्ग्यमुत्सादयति यथोक्तं कुर्याच्चेत् १८ अग्निं प्रणयत्यॐपनि-वपनात्कृत्वा हविर्धाने स्थापयति पृष्ठ्यामुभयतो द्व्यरत्न्यन्तरे प्रक्षालिते प्राची उभयतः शालामावर्त्त्य वर्षीयो दक्षिणम् १९ तयोश्छदिरध्यस्यति २० भित्तिं वाऽभावे २१ अन्यत्राऽपि २२ रराट्यां पुरस्तादासजत्यैषीकीम् २३ उच्छ्रायीभ्यां परिवार्य छदिः पश्चाच्च २४ चतुर्गृहीतं शालाद्बार्ये जुहोति युञ्जत इति २५ स गार्हपत्योऽतः २६ अपरं दक्षिणे वर्त्मनि दक्षिणस्याऽनसो हिरण्यं निधायाऽभिजुहोतीदं विष्णुरिति २७ दक्षिणया द्वाराऽनीता पत्नी पाणिभ्यां शेषं प्रतिगृह्याऽक्षधुरावनक्ति पराग्देवश्रुताविति युगप-त्तद्वचनत्वात् २८ भेदे मन्प्रावृत्तिः सान्निपातितत्वात् २९ स्रुक्स्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावती इति पूर्ववत् ३० पत्नी चाऽपरेणाग्नीन्परी-त्योत्तरस्याऽनक्ति पूर्ववत् ३१ ३ 8.3

हविर्द्धानाभ्यां प्रवर्त्त्यमानाभ्यामनुवाचयति १ त्रिरुक्तायामुद्गृह्येव वर्त्तनम् २ प्राची प्रेतमिति वाचयति ३ स्वं गोष्ठमिति च खर्जति ४ पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्वा वा नभ्यस्थे अभिमन्त्रयतेऽत्र रमेथामिति ५ उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति विष्णोर्नु कमिति ६ दक्षिणतः स्थूणामुपनिहन्ति विष्णवे त्वा इति ७ दिवो वेत्त्युत्तरं प्रतिप्रस्थाता ८ उत्तरतः स्थूणां पूर्ववत् ९ उभे वा दक्षिणतः १० इतरतस्ततः ११ यदु च मानुष इति श्रुतेः १२ प्रतद्विष्णुरिति वाचयति मध्यमं छदिरालभ्य १३ उत्तरे च १४ विष्णो रराटमिति रराट्याम् १५ विष्णोः श्नप्त्रे स्थ इत्युच्छ्राय्यौ १६ उदगग्राणि छदींषि पश्चाच्छ्रुतेः १७ द्वार्याः परिषीव्यति लस्पूजनिप्रतिह्वतया रज्ज्वा विष्णोः स्यूरसीति १८ विष्णोर्ध्रुवोऽसीति ग्रन्थिं करोति १९ उपक्रान्ते प्रमुञ्चति २० प्राग्वंशं हविर्द्धानम् २१ निष्ठाप्य वैष्णवमसीत्यालभते २२ भोजनभक्षणे चाऽस्मिन्न कुर्युः २३ अद्वारेण सदोहविर्द्धाने प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति २४ पृष्ठ्यामुभयतो द्वार्ये २५ दक्षिणस्याऽनसोऽधः प्रउगं खनत्युपरवान् २६ ४ 8.4

अभ्र्यादि करोत्यवटवदापरिलेखनात् १ चतुरः २ अक्ष्णया व्याघारणवत् ३ उत्तराऽपरं वा प्रथमम् ४ सम्यग्वा ५ उत्तरपूर्वं त्वन्त्यम् ६ प्रादेश-मात्रांस्तदन्तरान् ७ बृहन्नसीति यथापरिलिखितं खनति ७ इदम-हमित्युत्किरति यथाखातं प्रतिमन्त्रम् ८ उत्कृत्यां किरामीति पश्चात्सर्वेभ्यः ९ बाहुमात्रान् १० अक्ष्णया सम्भिन्द्यादशक्तौ सम्यक् ११ स्वरा-डित्यवमर्शयति यथाखातं प्रतिमन्त्रम् १२ अध्वर्युयजमानौ सम्मृशेते पूर्वदक्षिणेऽध्वर्युरपरोत्तरे यजमानः १३ अध्वर्युः पृच्छति यजमान किमत्रेति १४ भद्र मित्याह १५ तन्नौ सहेत्यध्वर्युरुपांशु १६ पुनर्दक्षिणापरेऽध्वर्युः पूर्वोत्तरे यजमानो यजमानः पृच्छत्यध्वर्यो किमत्रेति भद्र मिति प्रोक्ते तन्म इति यजमानः १७ प्रोक्षत्येनान् रक्षोहण इति १८ भेदे मन्त्रावृत्तिः सान्निपातित्वात् १९ अवनयनाऽवस्तरणे चाऽवटवद्र क्षोहणो रक्षोहण इति २० तनूनुपरि कुशान्कृत्वाऽधिषवणे फलके द्व्यङ्गुलान्तरे प्रक्षालिते प्राची अरत्निमात्रे सन्तृण्णे वोपदधाति पर्यूहति च रक्षोहणौ रक्षोहणाविति २१ तयोश्चर्माधिषवणं परिकृत्तं सर्वरोहितं निदधाति वैष्णवमसीति २२ तस्मिन् ग्रावाणः पञ्च वैष्णवा स्थेति २३ खरं पुस्तात्करोत्युद्धताऽवोक्षिते सिकतोपकीर्णं चतुरश्रम् २४ अन्तःपात्यात्षट् प्रक्रमान्प्राङ् यात्वा दक्षिणा सप्तमं महान्तं २५ तत्रौदुम्बरीं मिनोति यजमानमात्रीम् २६ यूपवच्छेते २७ अभ्र्यादि करोत्याऽवस्तरणात् २८

उद्दिवमित्युच्छ्रयति २९ द्युतान इति मिनोति ३० पर्यूहणाद्योपसेचनात्कृत्वा ध्रुवाऽसीति वाचयत्यौदुम्बरी-मालम्भ्य प्रजया भूयादिति पशुभिरिति वा ३१ स्रुवेण विशाखे जुहोति घृतेन द्यावापृथिवी इति भूमिप्राप्ते स्वाहा करोति सर्वत्र मन्त्रवत्सु जुहोत्युपदेशात् ३२ अनाम्नातप्रतिषेधाच्च ३३ ५ 8.5

नाभिदघ्नं सदः १ मत्या वा २ उदग्वंशम् ३ अष्टादशारत्न्येकविंशतिश्चतुर्विंशतिर्वा ४ नव तिर्यगर्धायामो वा ५ औदुम्बरीं मध्ये पृष्ठ्यामेके ६ इन्द्र स्य च्छदिरिति मध्यमं च्छदिरारोप्याऽपरपूर्वे च ७ त्रिवर्गौ चोत्तरतः ८ परित्वेति परिवार्य परिषीवणग्रन्थ्यभिमर्शनान्यैन्द्रैः ९ हविर्द्धानापरान्तमुत्तरेणाऽग्नीध्रमग्न्यगारद्वारमन्तर्वेद्यर्द्धं भूयः सर्वं वा १० निष्ठाप्य वैश्वदेवमसीत्यालभते ११ धिष्ण्यान्निवपत्युद्धताऽवोक्षिते पुरीषं निवपति स्फ्येनाऽन्वारब्ध उदङ्ङुपविश्य विभूरसीति प्रतिमन्त्रम् १२ आग्नीध्रीयं पूर्वम् १३ सिकताश्चोपरि १४ रौद्रे णेति सर्वत्र १५ षट् सदसि १६ प्रत्यङ्मुखो द्वारमपरेण होतुः १७ दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य १८ होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान्ब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकानाम् १९ आग्नीध्राद्दक्षिणं सम्प्रति वेद्यन्ते दक्षिणामुखो मार्जालीयम् २० सदोद्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीयबहिष्पवमानदेशचात्वालशामित्रौदुम्बरि-ब्रह्मासनशालाद्वार्यप्राजहितान्त्सम्म्राडसीति प्रतिमन्त्रम् २१ उत्करं स-मूहयोऽसि विश्ववेदा ऊनातिरिक्तस्य प्रतिष्ठेति २२ परिस्तरणपात्रसंसादन-प्रोक्षणाऽज्यनिर्वपणानि कृत्वोत्तरपरिग्रहादि करोति २३ अन्तःपात्य-सहितम् २४ बर्हिरन्तं प्रेष्यति । तत्र सर्वमासादयति २५ अत्रैव प्रोक्षणम् २६ इध्मं निधायाऽग्नीषोमीयाय वेदेः स्तरणमग्रहणं प्रस्तरस्याऽपराह्णे २७ अर्द्धव्रते प्रत्ते प्रविश्य प्रणयनीयाऽधानम् २८ आज्याऽधिश्रयण-स्रुक्सम्मार्जनोद्वासनाऽवेक्षणानि कृत्वा शालाद्बार्यमपरेणाऽस्ते यजमान उपस्थे सोमं कृत्वा २९ शालाद्वार्यमपरेण सोमक्रयणीपदं परिकिरति ३० चतुर्द्धैके आहवनीयस्योपयमनीष्वाग्नीध्रीयस्याऽक्षोपाञ्जने च ३१ आज्य-प्रोक्षणीरन्तःपात्यदेशे उत्पूय पश्वाज्यग्रहणम् ३२ धारयन्त्याज्यानि ३३ अपिव्रताश्चाऽन्वारभन्ते यजमानम् ३४ वाससा छादयत्येनान् ३५ चरत्सु नाऽद्रि येत ३६ ६ 8.6

प्रदीप्तमिध्मं त्वं सोमेति प्रचरण्याऽभिजुहोति १ जुषाणो अप्तुरिति द्वितीयाम् २ अग्नये प्रह्रियमाणायाऽनुवाचयति ३ सोमाय प्रणीयमानायेति वा ४ आहवनीयं गच्छन्त्यादाय ग्रावद्रो णकलशसोमपात्राणीध्मचतुष्टयं च सन्नद्धं वपाश्रपण्यौ रशने शकलवृषणमरणी च ५ अग्ने नयेति वाचयति ६ उत्तरेण सदो हृत्वाऽग्नीध्रेऽग्निं निदधाति ७ ग्रावद्रो णकलशसोमपात्राणि च ८ अयन्न इति जुहोत्यस्मिन् ९ उत्तरेण परिक्रम्याऽहवनीयस्योत्तरतो निदधात्यन्यदाज्यसोमवर्जम् १० धिष्ण्याऽव्यवायोऽध्वर्योः ११ इध्म-प्रोक्षणादि करोति १२ खरोत्तरार्द्धे एकवृत्स्तरणं पश्चाद्वोत्तरवेदेः १३ आऽहवनीयेक्षणात्कृत्वोरु विष्णविति जुहोति १४ पुरस्ताद्वा समिधा-वाधायेति श्रुतेः १५ आसाद्याऽज्यानि दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्त्सोमं निदधाति देव सवितरिति १६ एतत्त्वमिति विसृज्योपतिष्ठते १७ स्वाहा निरिति निष्क्रम्याऽग्ने व्रतपा इत्याहवनीये समिधमाधाय मदन्तीरुपस्पृश्याऽङ्गुलीर्विसृजते १८ पत्नी च गार्हपत्ये तूष्णीं मदन्ती-रुपस्पृश्य १९ चात्वाले मदन्तीः कृत्वा २० नामग्रहणभोजने अस्यातः कुर्वन्ति २१ व्रत्यनिवृत्तिः २२ हविःशेषभक्षः २३ अग्नीषोमीयोऽतः पशुः २४ तद्देवत्यः

पशुपुरोडाशः २५ ७ 8.7

अभ्र्यादि करोति १ दक्षिणेन हविर्द्धानं पश्विडां हरति २ गुदतृतीयं च ३ मार्जालीयं दक्षिणेन जाघनीम् ४ प्रत्याहृत्य वा सोमाऽहवनी-ययोरव्यवायात् ५ यूपैकादशिनी चेद्र थाक्षमात्राण्यन्तराणि ६ पूर्वार्द्धं वा समं विभज्य ७ पक्षसम्मिता वाऽग्नौ ८ यूपाहुत्यभ्र्यादा-नयवाऽवपनानि सकृत् ९ भेदेनाऽन्यत्सान्निपातित्वात् १० मध्यमं परि-लिख्योत्तरं दक्षिणं वा व्यत्यासमितरान् ११ आऽवटहोमात्करोति १२ अञ्जनाद्याचषालेक्षणात्कृत्वैकैकस्य १३ श्वो वा दक्षिणोत्तराणामव-गूहनान्तमालम्भनाऽसम्भवात् १४ परिवीय मध्यममवगूहनान्तम् १५ अग्निष्ठे चैषां रशनाः परिवेष्ट्य वासयति १६ अभ्यञ्जनप्रभृति करोति १७ यथाखातमुच्छ्रयति १८ वर्षिष्ठो दक्षिणोऽनुपूर्वा इतरे १९ तीव्रसुत्यग्निष्ठः प्राची च २० यथायूपं वेदिवर्द्धनम् २१ वर्षिष्ठाद्दक्षिणं वितष्टं द्वादशं निदधात्येष त इति २२ प्रोक्षणाद्याऽवगूहनात्करोत्यनर्थलुप्तम् २३ अनुच्छ्रित्य वोत्तरम् २४ यथोच्छ्रितं सवनीयानालभत एकतृणेनोपाकृत्या-ऽग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्व देवैन्द्र मारुतैन्द्रा ग्नसावित्रवारुणान् २५ एकयूपे पश्वेकादशिन्यामाग्नेयं नियुज्य तस्मिंस्तस्मिन्नितरानुदीचः २६ आग्नेयः प्रथमो गच्छत्यन्वारब्धोऽनुपूर्व्या इतरे २७ दक्षिणं च निघ्नन्त्येनमुत्तरमितरान् २८ समानमुपप्रेष्यपरिपशत्ये संज्ञपयाऽन्व-गन्प्रोक्षण्युल्मुकाऽसिशामित्राऽन्तर्द्धानप्रच्छेदस्तोकसंप्रैषशामित्राऽनुशासनसंवादवनस्पतिस्विष्टकृदिडादिग्व्याधारणं समासिच्य प्रभूतत्वात् २९ उखाशूलं वपाश्रपण्यौ च ३० न वसासन्देहात् ३१ सौत्रामणीदर्शनाच्च ३२ नाऽविरोधात् ३३ पाकवैषम्यात्सौत्रामण्याम् ३४ मनोतावसाहोमौ पृथक्कालभेदात् ३५ यूपैकादशिन्या वशावपामार्जनान्तं कृत्वा शालाद्वार्ये पत्नीयूपोच्छ्रयणं नाभिमात्रस्य ३६ परिस्तरणपात्रसंसादनप्रोक्षणाऽज्यनि-र्वपणाऽधिश्रयणानि कृत्वा स्फ्यादि करोति ३७ ८ 8.8

त्वाष्ट्रो बस्तः पर्यग्निकृतमुत्सृजन्ति १ आज्येन संस्थापयन्तीति श्रुतेः २ पशुपर्यग्निकरणाच्च ३ तदन्तं वा कर्मनामधेयात् ४ त्वष्टृवनस्पत्योश्च प्रयाजेष्विज्यादर्शनात् ५ अग्नीषोमीयस्य वपमार्जनान्ते वसतीवरीग्रहणं स्यन्दमानानामनस्तमिते ६ अस्तमितश्चेन्निनाहृयात्पुरेजानश्चेत् ७ अनीजा-नोऽन्यस्यापि समीपाऽवसितस्य पुरेजानस्य ८ उभयाऽभाव उल्कुषीं हिरण्यं वोपर्युपरि धारयन्हविष्मतीरिति ९ अग्नेर्व इति निदधाति शाला-द्वार्यमपरेण १० सुब्रह्मण्यां च प्रेष्यति पैतापुत्रीयाम् ११ आदित्या-ऽभ्ययेऽहुतयामापि १२ दक्षिणाग्निहोमान्तमग्नीषोमीयमस्तमिते संस्थाप्य व्युत्क्रामतेत्याह त्रिः १३ शालाद्वार्यमपरेणाऽस्ते पत्न्युत्तरवेदिमपरेण यजमान उपस्थे सोमं कृत्वा १४ शालाद्वार्यमपरेण वसतीवरीः परिहरति १५ दक्षिणेन निर्हृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्रा ग्न्योरिति १६ आहृत्य स्थाने निदधाति १७ कलशं पत्न्यालभते १८ उत्तरेण परिक्रम्योत्तरस्यां पूर्ववत् १९ मित्रावरुणयोरिति वा २० विश्वेषां देवानामित्याग्नीध्रे २१ सोमं चाऽसन्द्याम् २२ दीक्षितश्च तत्र तां रात्रिं रक्षति २३ सुब्रह्मण्यां च प्रेष्यति २४ परिवाप्यायै दोहनम् २५

आवसथोन्मर्दनाऽलङ्करणदन्तप्रक्षालनान्यध्वर्योरदीक्षितस्याध्वर्योरदीक्षितस्य २६ ९ 8.9

इति कातीये श्रौतसूत्रेऽष्टमोऽध्यायः ८

अपररात्र ऋत्विजः प्रबोधयन्ति १ अप उपस्पृश्य शालाद्वार्ये परिस्तरण पात्रसंसादन प्रोक्षणाऽज्यनिर्वपणाऽधिश्रयण स्रुक्सम्मार्जनोद्वासनाऽवेक्षणानि कृत्वाऽग्नीध्र उत्पूय पश्वाज्यग्रहणम् २ आज्यान्यादाय सोमं चाऽर्थवच्चाऽहवनीय इध्मप्रओक्षणादि करोति ३ अग्नीषोमीयवत्स्तरणम् ४ आऽज्याऽसादनात् कृत्वेषान्तरेणाऽर्द्धसोममद्रिषु सम्मुखेषु निदधाति हृदे त्वेति ५ विश्वास्त्वामिति विसृज्योपतिष्ठते ६ एतेनाऽहरणं सोमार्थस्या-ऽभिषवे ७ नोद्धहरणं ततो बहिर्द्धाभावात् ८ अभिषुतस्य चाऽनवहरणं कृतत्वात् ९ प्राग्वाचं प्रवदितोः प्रातरनुवाकोपाकरणं देवेभ्यः प्रात-र्यावभ्योऽनुब्रूहीति समिधमादधत् १० देवेभ्य इत्येके ११ सुब्रह्मण्यां च प्रेष्यति १२ प्रातरनुवाकं जाग्रदुपासीताऽध्वर्युः १३ स्वप्याद्वा १४ अग्नीदैन्द्र मेकादशकपालं निर्वपति हरिभ्यां धानाः पूष्णे करम्भं सरस्वत्यै दधि मित्रावरुणाभ्यां पयस्याम् १५ इन्द्रा य वा हरिपूषसरस्वतिमित्रा-वरुणवते धानादीनि यथासंख्यम् १६ १ 9.1

उन्नेतुः पात्रयोजनम् १ खरोत्तरपूर्वार्द्ध उपांश्वन्तर्यामयोः २ तदपरेण द्विदेवत्यानि प्रत्यञ्चि ४ रास्नावदैन्द्र वायवम् ५ अजकावं मैत्रावरुणम् ६ औष्ठमाश्विनम् ७ दक्षिणपूर्वार्द्धे शुक्रामन्थिनोः ८ दक्षिणं शुक्रस्य ९ आग्रयणस्थाली मध्ये १० दक्षिणोक्थ्यस्थाली सपात्रा ११ तथा-ऽदित्यस्थाल्युत्तरा १२ ऋतुपात्रे पूवे स्रुक्पुष्कराकृती उभयतोमुखे कार्ष्मर्यमये आश्वत्थे वा १३ ऊर्ध्वानीतराणि प्रादेशमात्राणि मध्य-सङ्गृहीतानि १४ आग्रयणादपरां परिप्लवां स्रुक्पुष्कराम् १५ अधोऽधोऽक्षं प्रत्यञ्चं द्रो णकलशमत्युह्योपर्युपर्यक्षं पवित्रमस्मिन्करोति । शुक्लं जीवो-र्णानाम् १६ उभयतोदशं परिप्लवायाम् १७ पूर्वेणोपस्तम्भनमुत्तरं ध्रुवस्थालीमनन्तर्हिते १८ धुरि प्रचरणीम् १९ पूर्वेणाऽक्षमुपरि पूतभृतम् २० परेणाऽधवनीयम् २१ प्रागक्षाद्दशचमसान्त्संवृन्तानधः २२ प्रत्यगेकधनानयुग्मानुदहरणांस्त्रिप्रभृत्यापञ्चदशभ्यः २३ अभूदुषा रुश-त्पशुरित्युच्यमाने २४ २ 9.2

चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति १ अपरं गृहीत्वोदङ् गच्छन्नाहाऽप इष्य होतरिति २ प्रेष्यति च मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधनिन एताऽग्नीच्चात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेति ३ अपो गत्वा देवीराप इत्यप्सु जुहोति ४ कार्षिरसीति मैत्रावरुणचमसेनाऽज्यमपोहति ५ समुद्र स्य त्वेति तेन गृह्णाति ६ एकधनांश्चोन्नयन्ति ७ पान्नेजनांश्च पत्न्यो द्वौ द्वौ ८ प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च संस्पर्शयति समाप इति ९ इतरेतरस्मि-न्व्यानयन्त्येके मैत्रावरुणचमसे प्रथमम् १० होतृचमसे वसतीवरीः कृत्वा

यजमानाय प्रयच्छति निग्राभ्याः ११ होत्रा पृष्टः प्रत्याहोतेव नंनमुरिति १२ प्रचरणीसंस्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्न इति १३ उक्थ्ये प्रथमं परिधिमालभते १४ प्रविशत्येवाऽन्यत्र १५ रराट्याऽलम्भनं वा षोडशिनि १६ छदिरतिरात्रे १७ अतीत्य दक्षिणेन होतारं मैत्रावरुणचमसमा-धवनीयेऽवनयति वसतीवरीतृतीयं च अग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महिना विश्वशम्भः । स नः पावको द्र विणं दधात्वायुष्मन्तः सहभक्षाः स्यामेति १८ तावच्चैकधनानाम् १९ एकधनस्थान उभयशेषन्निधाय २० ३ 9.3

अधिषवणे पर्युपविशन्ति १ उत्तरतोऽध्वर्युयजमानौ २ पूर्वोऽध्वर्युः । अपरेण परीत्येतरे त्रयः ३ देवस्य त्वेत्यद्रि मादाय वाचं यच्छति प्राग्घिङ्कारात् ४ स उपांशुसवनः ५ निग्राभ्यासु वाचयत्युरस्येना निगृह्य निग्राभ्या स्थेति ६ उपांशुसवने सोमं मिमीत इन्द्रा य त्वा वसुमते रुद्र वत पञ्चकृत्वः प्रतिमन्त्रम् ७ यत्त इति मितालम्भनम् ८ प्रतिप्रस्था-तांऽशून्षडादत्तेऽङ्गुल्यन्तरेषु द्वौ द्वौ कुरुते ९ श्वात्रा स्थेत्यासिञ्चति निग्राभ्याः १० प्रहरिष्यन्द्वेष्यं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्यं सोमेति ११ अभावे तृणम् १२ मा भेरिति प्रहरति १३ एवं त्रिरभिषुणोत्यासेचं निग्राभ्याः १४ अष्टकृत्व एकादशकृत्वो द्वादशकृत्वः १५ सर्वे पञ्चवर्गाः पशुकामस्य । अष्टवर्गा ब्रह्मवर्चसकामस्य १६ प्रतिवर्गं निग्राभं वाचयति होतृचमसेऽल्पानंशूनवधाय प्रागपागिति १७ अद्रि णा चतुर्थम् १८ तूष्णीं वा १९ उपांशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरिति २० प्रतिप्रस्थातोपगृह्णाति पात्रम् २१ आत्तानां च द्वौ द्वावन्तर्दधाति ग्रहणभेदात् २२ मन्त्रलिङ्गाच्च २३ षड् वा श्रुतिसामर्थ्यात् २४ यत्त इत्यात्तान्त्सोमे निदधाति २५ परिमृज्याऽसादनमुपांश्वन्तर्यामयोः २६ अभिचरन्त्सादयेद-विसृजन्नमुष्य त्वा प्राणं सादयामीति । उदानमित्यन्तर्यामम् २७ पाणिना चाऽपिदधात्यमुष्य त्वा प्राणमपिदधामीति । उदानमन्तर्यामम् २८ स्वा-हेत्युक्त्वोर्वन्तरिक्षमिति निष्क्रमणम् २९ अन्वारभतेऽन्यस्मै प्रदाय होतृ-चमसम् ३० वरं वृत्वा ददाति च ३१ स्वांकृत इति हुत्वा पात्रमुन्मार्ष्टि ३२ प्रथमे परिधा उत्तानं पाणिं प्रागुपमार्ष्टि देवेभ्यस्त्वेति ३३ वास-उरोबाहुषु श्लिष्टमंशुमभिचरञ्जुहुयाद्देवांशविति ३४ आग्रयणस्थाल्यां शेषैकदेशमासिच्यांऽशुं प्रास्यति तृतीयसवनाय ३५ प्राणाय त्वेति पात्रसादनम् ३६ उपांशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति संस्पृष्टम् ३७ ४ 9.4

उपविष्टयोरभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यात् १ आप्याय-नान्तोऽभिषवस्त्रिपर्यायः २ मन्या ३ पर्यायादिषु निग्राभ्यासेचनम् ४ प्रथमे वा प्रभूत्वात् ५ निग्राभान्ते सरसानंशून्त्सम्भरण्याऽधवनीये-ऽवधायाऽवधूयाऽहरति ६ एवं द्विरपरम् ७ पूर्ववन्निग्राभ्याः ८ पूर्वे वोपांशुं गृहीत्वा

गृहीत्वाऽप्यायनसम्भरणे कृतत्वात् ९ धर्ममात्रं पर्यु-पवेशनम् १० अभिषवविपर्यासो वाऽभिमृष्टादंशूनपकृष्य निग्राभ्याश्चाऽनु-पूर्व्ययोगादनात्तस्य चाऽभिमानसामर्थ्यात् ११ ऋजीषभावाच्च १२ प्रोह्य द्रो णकलशमृजीषमुखेष्वद्रि षु निदधात्युग्दातारः १३ पवित्रं च वितन्व-न्युदक् १४ स्वयं वाऽकुर्वत्सु १५ आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति । ताः पवित्रे यजमानः १६ ततो ग्रहग्रहणमाध्रुवान्माध्यन्दिने च पञ्च प्रथमान् १७ शुक्रो द्रो णकलशे १८ ततोऽन्येऽनादेशे १९ सावि-त्रपात्नीवतहारियोजनोपक्षीणानाग्रयणात् २० पूतभृतश्चमसान् २१ तृतीय-सवने वैश्वदेवम् २२ अनादिष्टांच्चेहोन्नयनश्रुतेः २३ दशापवित्रेण परिमृज्य परिमृज्यैव ते योनिरिति ग्रहसादनम् २४ नाऽयोनिकेषु २५ सर्वेष्विति वात्स्योऽविशेषोपदेशात् २६ सावित्रर्तुग्रहप्रतिषेधाच्च २७ प्रतिवषट्कारं हुत्वा वषट्कर्तुर्भक्षहरणम् २८ यथास्वं चमसान् २९ वषट्कर्तुर्वा पूवं श्रुतिसामर्थ्यात् ३० उन्नेतोन्नयति समाख्यानात् ३१ ५ 9.5

उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति १ उपांशुवदनाम्नातवरशेषा-ऽसेचनवर्जम् २ अपमार्ष्ट्यत्र ३ प्रथमे च न्युब्जेन पाणिना प्रत्यक् ४ उपांसुसवनसंस्पृष्टस्योदानाय त्वेति पात्रसादनम् ५ एन्द्र वायवं गृह्णात्या वायविति ६ अपगृह्य पुनरिन्द्र वायू इति ७ मैत्रावरुणमयं वामिति ८ पयसा श्रीणात्येनं कुशावन्तर्धाय राया वयमिति ९ एवं सर्वत्र श्रयणेषु १० शुक्रं बैल्वेन वा तं प्रत्नथेति ११ अयं वेन इत्येके १२ मन्थिनमयं वेन इति १३ सक्तुभिः श्रीणात्येनं मनो न येष्विति १४ आग्रयणं द्वयोर्धारयोर्ये देवास इति १५ दशापवित्रेणाऽग्रयणमुपगृह्य त्रिर्हिंकृत्य सोमः पवत इति सकृच्छेषम् १६ प्रथमस्थानेन प्राग्देवताऽदेशात् १७ प्रातःसवने चोच्चैः कर्माणि १८ मध्यमेन माध्यन्दिने १९ उत्तमेन तृतीयसवने २० उक्थ्यमुपयामगृहीत इति २१ ध्रुवं मूर्धानं दिव इति २२ आ होमादस्य सुन्वन्न मूत्रपुरीषे कुर्यात् २३ वैश्वानरं च जानन् २४ पूर्णान् स्थालीग्रहानर्धपूर्णं द्रो णकलशं कृत्वा सर्वमासिञ्चति सुन्वन् २५ अध्वर्युप्रतिप्रस्थातृप्रस्तोत्रुद्गातृप्रतिहर्तृसुन्वन्तः समन्वारब्धा निष्क्रामन्ति २६ अध्वर्युः प्रथमो यथासंख्यमितरे २७ हुत्वा वा समन्वारभेरन् २८ यस्त इति विप्रुषां होमं जुह्वति २९ अध्वर्युर्वा ३० वेदितृणे अध्वर्युरादत्ते । प्रह्वा उदञ्चा गच्छन्ति ३१ अन्यतरत्तृणं चात्वाले प्रास्यति देवानामिति ३२ उद्गातृणां पुरस्तादितरत्तूष्णीम् ३३ जपत्सु सोमः पवत इति पवमानोपाकरणं प्रस्तोत्रे तृणे प्रयच्छन् ३४ सर्वेषु ३५ अतृणो वा ३६ ६ 9.6

कुशमुष्टिं वा १ प्रत्यङ्मुखाः उपविशतः पुरस्ताद्दक्षिणो यजमानः २ स्तूयमान उन्नेताऽधवनीयं पवित्रमन्तर्धाय पूतभृत्यासिञ्चति ३ स्तोत्रान्ते प्रेष्यत्यग्नीदग्नीन्विहर बर्हिस्तृणीहि पुरोडाशाँ

पञ्चाशतं पञ्चाशतं प्रत्यहं ददात्युत्तमे द्वादशं शतम् १४ वत्सा वा पञ्चाशतो यथर्तुजाः १५ प्रतिपर्वावभृथाः १६ पर्वान्तरेष्वहतं वस्ते १७ अस्त्र्युपायी १८ अमांसाशी १९ अनुबन्ध्या बार्हस्पत्या मैत्रावरुणीसौर्याश्विन्यो यथाऽवभृथम २० प्रतिकर्मसोमाः २१ अग्न्याधेयपुनराधेयाग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणाः २२ उक्थ्यं पशुबन्धमेके २३ ७ 22.7

प्रातःसवनीयाननु हवींषि निर्वपति १ पयसी अग्निहोत्रयोः २ अन्त्य-देवताऽनूबन्ध्याऽद्या सवनीया ३ एकदेवतेषूभयम् ४ चातुर्मास्येषुचैके ५ सप्तदशाः पञ्च ६ उपहव्योऽनिरुक्तो ग्रामकामस्य ७ अनृतं वाऽभिशस्यमानस्य ८ श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति ९ स्वर्गकामस्यर्तपेयः १० दीक्षोपसदो द्वादश ११ तिस्र उपसदः १२ षड्वा १३ उभयत्र वा द्वादशता गुणत्वात् १४ घृतं व्रतयति १५ चमसं पूर्णमङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितमाद्यायामुपसदि १६ द्वितीयेन द्वितीयायाम् १७ तृतीयेन तृतीयायाम् १८ भक्षयिष्यन्तः सत्यं ब्रूयुः १९ सदो वा स्रपस्यन्तः २० सोमचमसो दक्षिणौदुम्बरः सगोत्राय ब्रह्मणे देयः २१ पूतभृतः सर्वार्थत्वात् २२ अंशुचमसमेके तेन स यजेतेति श्रुतेः २३ अश्ववत् २४ पशूपवादाच्च २५ द्विनामोत्तरो बहुहिरण्यो दूणाशश्च २६ ८ 22.8

दीक्षणीयायां हिरण्यं द्वादशमानं ददाति १ उत्तरेषु च द्विगुणं पूर्वं पूर्वम् । प्रायणीयाऽतिथ्योपसत्सु २ पशुवपान्ते प्रतिसवनं निहितेषु सवन-मुखीयेषूदयनीयायामनूबन्ध्यायामुदवसानीयायां स्रजं चोद्गात्र ३ रुक्मं होत्रे ४ अनडुच्छतं कालेसर्वेभ्यः ५ वैश्यपशुकामयोर्वैश्यस्तोमः ६ सवनान्याशीर्वन्ति ७ प्रातःसवने प्रतिदुहा श्रयणम् ८ शृतेन माध्यन्दिने ९ तृतीयसवने दध्ना दक्षिणा वत्सतराः पञ्चवर्षाः पृश्नयः १० वत्सतर्यश्च त्रिहायण्योऽप्रवीताः पञ्चवर्षा राजीवपृश्नयो नवनीतपृश्नयोऽरुण्यः पि-शङ्ग्य सारङ्ग्य इति ११ उभयस्य सहस्रं द्वादशं वा शतम् १२ सोमाति-पूतस्य तीव्रसुदुक्थ्यः १३ अपरुद्धराजन्यस्य १४ दीर्घव्याधिग्राम-कामप्रजाकामपशुकामानां वा १५ पूर्ववत्सोमाः १६ ९ 22.9

धेनुशतमाशिरे दुहन्ति १ तदेव दक्षिणा २ अच्छावाकविग्रहेषु भक्षणम् ३ अवघ्राणमितरेषु ४ तेष्वेवोन्नयनमभ्यभि सोमानुन्नयन्तीति श्रुतेः ५ अध्वर्यू चमसाध्वर्यश्च सर्वे प्रतिगृणन्त्यच्छावाकाय ६ द्वन्द्वानां प्रथमो राड् राजन्यस्य राज्यकामस्य ७ यथाशक्त्येकविंशतिवर्गान्दघात् ८ ऋषभ ऐन्द्र ः! परियज्ञः ९ अन्नाद्यकामस्य विराट् १० यथाशक्ति दशवर्गान्ददद्यात् ११ पशुराग्नेयः परियज्ञः १२ प्रजातिकामस्यौपशद १३ दक्षिणा चतुर्विंशं शतम् १४ पशुर्वैश्वदेवः परियज्ञः १५ बहु प्रतिगृह्य गरगीरिव यो मन्येत तस्य पुनस्तोम उक्थ्यः १६ दक्षिणा द्वादशमिथुना पुनर्वतां च यथाशक्ति १७ पशुकामयज्ञौ

चतुष्टोमौ १८ षोडश्युत्तरः १९ पूर्वस्मिन्यथाशक्त्ये-कशफान्ददद्यात् २० उभयानुत्तरस्मिन् २१ उद्भिद्बलभिदौ चाऽऽहरतः संयुक्तौ २२ पूर्वेणेष्ट्वोत्तरेणाऽवश्यम् २३ इषुरिष्टिरन्तरेणैनावाग्नेयः पुरो-डाशः २४ उदवृढः प्रस्तरः २५ बाणवन्तः परिधयः २६ अर्धमासं मासं संवत्सरं वा २७ दक्षिणा गायत्री चतुर्विंशतिवर्गा यथाशक्ति २८ अपचितिकामस्यापचिती २९ राजयज्ञावित्येके ३० दक्षिणाऽश्वरथश्चतुर्युगभयतः ३१ कांस्यकवचः ३२ शतार्हा अश्वाः ३३ साग्निचित्यावग्नेस्तोमौ सर्व-जिद्दीक्षौ ३४ पूर्वः पक्ष्युत्तरो ज्योतिः ३५ १० 22.10

धान्याचितानि चत्वारिचत्वारि दक्षिणा १ पूर्वस्य षड्गवान्युत्तरस्य चतुर्गवानि २ ऋषभगोसवौ ३ पूर्वोराज्ञः ४ दक्षिण ऋषभसहस्रं द्वादशं वा शतम् ५ उक्थ्यो गोसवोऽयुतदक्षिणः ६ वैश्ययज्ञ इत्येके ७ सराजानो विशो यं पुरस्कुर्वीरन्त्स एतेन यजेत ८ स्थण्डिलेऽभिषिच्यते प्रतिदुहा-ऽऽहवनीयस्य दक्षिणतः ९ स्थपतिरित्येनं ब्रूयुः १० वैश्यस्तोमदक्षिणा-लिङ्गे मरुत्स्तोमो गणयज्ञो भ्रातॄणां सखीनां वा ११ प्रजाकाम-पशुकामयोरैन्द्रा ग्नकुलायः १२ कुलदक्षिणो द्वियज्ञो भ्रात्रोः सख्योर्वा १३ इन्द्र स्तोमो राजयज्ञः सहस्रं दक्षिणा १४ उक्थ्यः १५ पुरोधाकाम-स्येन्द्रा ग्न्योस्तोमः १६ राजपुरोहितयोर्वा सह यजमानयोः १७ पृथग्वा १८ दक्षिणा गायत्रीसम्पन्ना ब्राह्मणस्य १९ जगत्या राज्ञः २० विघनौ पशुकामस्य २१ अभिचरतो वा २२ बृहतीसम्पन्नाः पशुकामस्य २३ अभिचरतः प्रज्ञाताः २४ सन्दंशवज्रावभिचरतः २५ षोडशी वज्रः २६ शुण्ठाधी लोहाकर्णी षोडशिनः सोमक्रयणी २७ अहर्गणेऽप्यविशेषात् २८ विश्वजित्परिवासाश्च २९ न वा स्वसम्बन्धात् ३० एकराजमेव पूर्वेणाऽभिचरेत् ३१ जनपदं वज्रेण ३२ व्यत्यासं वेनौ प्रयुञ्जीत ३३ शमित्वा स्तृत्वा वा प्रतिष्ठामेन यजेत शान्त्यर्थेन शान्त्यर्थेन ३४ ११ 22.11

द्वादशोपसत्का अहीना मासापवर्गाः १ दीक्षाः सुत्योपसच्छेषेण २ द्व्यहप्रभृतयो द्वादशाहपर्यन्ताः ३ तत्राऽम्नानादतिरात्रांश्चैके ४ दाशरात्रिकाण्यहानि द्व्यहादिष्वेकोच्चयेन तद्गुणदर्शनात् ५ सहस्रदक्षिणाः ६ चतूरात्रादिष्वधिकम् ७ प्राकृतं वा प्रत्यहम् ८ पौण्डरीकेऽयुतम् ९ समविभक्ताः प्रत्यहं ददाति १० अन्त्येऽहन्यधिकाः त्रयोदशातिरात्राः १२ चत्वारोऽषोडशिकाः प्रथमाः १३ प्रजातिकामस्य नवसप्तदशः १४ ज्ये-ष्ठस्य ज्यैष्ठिनेयस्य विषुवान् १५ गौर्भ्रातृव्यवतः १६ स्वर्गकामस्याऽऽयुः १७ आमयाविनो वा १८ ज्योतिष्टोमविश्वजित्त्रिवृत्पंचदशसप्तदशैकविंशा यथासंख्यामृद्धिपशुब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानाम् १९ अप्तोर्यामः प्र प्रेव यस्मात्पशवो भ्रंशेरन् २० अभिजिद्भ्रातृव्यवतः २१ सर्वस्तोमो बुभूषतः २२ यूपैकादशिनी चास्मिन् २३ १ 23.1

द्व्यहास्त्रयः १ अषोडशिकावतिरात्रा उत्तरयोः २ आङ्गिरसचैत्ररथका-पिवनाः ३ द्वितीयमुक्थ्यपूर्वमेके ४ प्रथमेन यजेत यः पौण्यो हीन इव स्यात् ५ द्वितीयेन प्रजाकामः ६ तृतीयेन स्वर्गकामः पशुकामो वा ७ त्र! यहाः पंच ८ गर्गबैदछन्दोमान्तर्वसुपराकाः ९ द्वितीय त्रिवृतोऽतिरात्राः सर्वे राज्यकामस्य १० अन्तर्वसुः पशुकामस्य ११ पराकः स्वर्गकामस्य १२ चतुरहाश्चत्वारः १३ अत्रिवचतुर्वीरजामदग्नवसिष्ठसंसर्पविश्वामित्रा १४ जामदग्नो विंशतिदीक्षः पुष्टिकामस्य १५ उपसदः पुरोडाशिन्यः १६ अनूपसदं जुहोति १७ आज्यधर्माः स्थानापत्तेः १८ औषधधर्माः वा द्रव्यसामान्यात् १९ अनुहोमाश्च पुरोडाशाः २० प्रत्युपसदसेकोच्चयेन कपालान्येककपालप्रभृतीनामाग्नेयाश्विनवैष्णवसौम्यसावित्र धात्रमारुतबार्हस्पत्यमैत्रवारुणैन्द्र वैश्वदेवाः २१ २ 23.2

तेषां होमः १ अग्ने वेर्होत्रं वेरध्वरमा पितरं वैश्वानरमवसे करिन्द्रा य देवेभ्यो जुहुता हविः स्वाहा २ देवावश्विनौ मधु कशयाद्येमं यज्ञं यजमानाय मिमिक्षतमिन्द्रा य देवेभ्यो जुहुता हविः स्वाहा ३ देव विष्ण उर्वद्यास्मिन्यज्ञे यजमानायाधिविक्रमस्वेन्द्रा य देवेभ्यो जुहुता हविः स्वाहा ४ देव सोम रेतोधा अद्यास्मिन्यज्ञे यजमानायेधीन्द्रा य देवेभ्यो जुहुता हविः स्वाहा ५ देव सवितः सुसावित्रमद्यास्मिन्यज्ञे यजमानाया सुवस्वेन्द्रा य देवेभ्यो जुहुता हविः स्वाहा ६ देव धातः सुधाताद्यास्मिन्यज्ञे यजमाना-यैधीन्द्रा य देवेभ्यो जुहुता हविः स्वाहा ७ देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदतेन्द्रा य देवेभ्यो जुहुता हविः स्वाहा ८ देव्यनुमतेऽन्वद्येमं यज्ञं यजमानाय मन्यस्वेन्द्रा य देवेभ्यो जुहुता हविः स्वाहा ९ देव्यदिते स्वादित्यमद्यास्मिन्यज्ञे यजमानायासुवस्वेन्द्रा य देवेभ्यो जुहुता हविः स्वाहा १० देव्य आपो नंनम्यध्वमद्यास्मिन्यज्ञे यजमानायेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ११ सदः सदः प्रजावानृभुर्जुषाण इन्द्राय देवेभ्यो जुहुता हविः स्वाहाः १२ देव त्वष्टः सुरतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्रा य देवेभ्यो जुहुता हविः स्वाहेति १३ एतैः सुत्यान्ते द्वादशाहं यजते प्रतिलोममेकैकेन १४ ३ 23.3

पंचाहास्त्रयः १ देवानां प्रथमः २ द्वितीयः पंचशारदीयः ३ तेन यक्ष्यमाणः पंचवर्षाण्याश्वयुजीशुक्लेषु चतुस्त्रिंशतं पशूनालभते मारुतान् ४ वैश्य-स्तोमदक्षिणालिङ्गान् ५ उक्ष्णो वत्सतरीर्वर्णानुपूर्व्येण ६ अर्धा वत्सतर्यः ७ पर्यग्निकृतानुत्सृजन्त्युक्ष्णः । वत्सतरीभिः संस्थापयन्ति ८ एवं पंच वर्षाण्युक्ष्णो नियुञ्जन्ति ९ षष्ठे सवनीया भवन्ति त्रयस्त्रयोऽन्वहमैन्द्रा -मारुताः १० पंचोत्तमे ११ यः कामयेत बहुः स्यामिति स एतेन यजेत १२ पशवापदि चरवः १३ अपोनप्त्रियोऽप्सु मृते १४ वायव्यः पलायिते १५ बार्हस्पत्यः श्रवणकूटकाणश्चेत् १६ नैरृतोऽवसन्ने १७ पुरोडाशाः परे । रुद्राभिमानेऽग्नये रुद्रवते १८ संशीर्णश्चेदेककपालो भौमः १९ प्रासहा हृतश्चेदिन्द्रा य प्रसहवने २० भोजनीयमृते प्राजापत्यो द्वादशकपालः २१ मृतं ब्राह्मणान्भोजयेत् २२ अप्सु प्रासनम् २३ निधानं वाऽदुष्टत्वात् २४ अन्यत्रापि दोषसंयोगात् २५ न प्रकरणात् २६ व्रतवानुत्तमः २७ ज्योतिर्गोर्महाव्रतं गौरायुः २८ अहीना व्रतवन्तः सर्वजिद्दीक्षाः २९ ४ 23.4

षडहास्त्रयः १ ऋतूनां प्रथमः २ द्वितीये बृहद्र थन्तरपृष्ठः पंचाहः पृष्ठ्या-वलम्बाख्यः ३ तृतीये त्रिभ्यस्त्रिकद्रुकाः ४ सप्त सप्ताहाः ५ चत्वारो व्रतोत्तमाः प्रथमाः ६ तृतीयः पशुकामस्य ७ इन्द्र स्य पंचमः ८ द्वितीयप्रभृति षडेकाहाः ९ सर्वस्तोम उत्तमः १० जनकसप्तरात्रः ११ चतुर्भ्यो विश्वजिन्महाव्रतम् १२ उत्तमे षडहो बृहद्र थन्तरपृष्ठः पृष्ठ्यस्तोमा-ख्यः १३ विश्वजित्पशुकामस्य १४ अष्टाहे षडहान्महाव्रतम् १५ नवरात्रे त्रिकद्रुकाः १६ द्वितीयं त्रिकद्रुकेभ्यः पृष्ठ्यावलम्बः १७ दशरात्राश्चत्वारः १८ प्रथमस्त्रिककुप् १९ उक्थ्योऽग्निष्टोमपक्षस्त्रिरावृत्तः २० प्रतिष्ठाकामस्य २१ कौसुरुबिन्दः २२ अग्निष्टोमास्त्रिवृतस्त्रयः २३ पंचदशाश्चोक्थ्याः २४ सप्तदशाहश्च २५ एकविंशोऽतिरात्रः २६ पूर्वदशरात्रोऽभिचर्यमाणस्य २७ उक्थ्योऽग्निष्टोमपक्षः २८ गोपक्षोऽभिजित् २९ आयुर्विश्वजित्पक्षः ३० छन्दोमदशाहः पशुकामस्य ३१ पृष्ठ्यावलम्बाश्चत्वारश्छन्दोमाः ३२ पौण्डरीकः सर्वर्द्धिकामस्य ३३ दशरात्रो-ऽसत्रोत्थानः ३४ विश्वजिदतिरात्रः ३५ तुल्यमाध्वर्यवमतिरात्रेषु विश्वजिद्वर्जम् ३६ यथोक्तमुत्तमो यथोक्तमुत्तमः ३७ ५ 23.5

द्वादशरात्रादीनि रात्रिसत्त्राणि १ एकोच्चयेन चत्वारिंशदन्तानि २ यथोपदेशमहानि ३ आपूर्यमाणे दशरात्रः परः ४ प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमेकाहार्थे ५ पुरस्तादन्यत् ६ षडहार्थेऽभिप्लवः ७ तस्यादितः पंच पंचाहाथे ८ त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः ९ व्रतं च यथोक्तं चतुरहाथे १० गोआयुषी द्व्यहार्थे ११ अतिरात्रान्तरमावापस्थानम् १२ आवापसमवेतानामल्पमल्पं पूर्वम् १३ द्वे त्रयोदशरात्रे १४ पृष्ठ्यात्सर्वस्तोमोऽतिरात्रः १५ प्रकृतिविहितं द्वितीयम् १६ सम्भार्यं तृतीयम् १७ प्रायणीयाच्चतुर्विंशमहरभिजित्त्रयः स्वरसामानो विषुवांस्त्रयः स्वरसामानो विश्वजिद्व्रतमुदयनीयोऽतिरात्रः १८ चतुर्दशरात्राणि त्रीणि १९ द्वौ पृष्ठ्यौ २० प्रतिलोमः परः २१ मध्यमे त्रिकद्रुकाः ह्पृष्ठ्यमभितः २२ प्रतिलोमाः परे २३ विवाहोदकतल्पसंशयितानामेतत् २४ प्रकृतिविहितं तृतीयम् २५ पंचदशरात्राणि चत्वारि २६ उत्तरे प्रकृतिविहिते २७ चतुर्दशरात्राभ्यां पूर्वे व्याख्याते २८ पृष्ठ्ययोर्मध्ये महाव्रतम् २९ अतिरात्रादग्निष्टुद्द्वितीयस्य ३० स प्रायणीयस्तृतीयस्य ३१ १ 24.1

प्रकृतिविहितानि प्राग्विंशतिरात्रात् १ विंशतिरात्रोऽभिप्लवोऽभिजिद्विश्वजितौ च २ एकविंशतिरात्रयोरतिरात्रावषोडशिकौ ३ अभिप्लवास्त्रयः प्रथमादतिरात्रः ४ निदाघे द्वितीयं ब्रह्मवर्चसकामानाम् ५ त्रयस्त्रयः स्वरसामानो विषुवन्तमभितः ६ पृष्ठ्यौ च ७ उत्तरः प्रतिलोमः ८ मानव्यः सामिधेन्यः ९ सौमापौष्ण उपालम्भ्यः १० प्रकृतिविहितान्याद्वात्रिंशद्रात्रात् ११ द्वाविंशातिरात्रमन्नाद्यकामानाम् १२ त्रयोविंशतिरात्रं प्रतिष्ठाकामानाम् १३ पूर्वं चतुर्विंशतिरात्रं प्रजाकामानां पशुकामानां वा १४ द्वितीयं संसदः १५ अषोडशिकावतिरात्रौ १६ विशालः १७ पार्ष्ठिकानि त्रीण्युत्तराणि प्रतिलोमानुलोमानि १८ तमभितोऽग्निष्टोमावनिरुक्तौ १९ पृष्ठ्यस्तोमौ च २० उत्तरः प्रतिलोमः २१ तस्माद-ग्निष्टोमावनिरुक्तौ २२ च पंचविंशतिरात्रमन्नाद्यकामानाम् २३ षड्विंशतिरात्रं प्रतिष्ठाकामानाम् २४ सप्तविंशतिरात्रमृद्धिकामानाम् २५ अष्टा-विंशतिरात्रं प्रजाकामानां पशुकामानां वा २६ द्वात्रिंशद्रा त्रं च २७ त्रयस्त्रिंशद्रात्राणि त्रीणि २८ पंचाहाश्चत्वारः २९ त्रिभ्योऽतिरात्रोविश्वजित् ३० व्रतवद्द्वितीयम् ३१ अभिप्लवमभिप्लवान्तरयोरतिरात्रौ ३२ तृतीये त्रयस्त्रयः पंचाहा विश्वजितमभितः ३३ प्रतिलोमाः परे ३४ प्रकृतिविहितान्या चत्वारिंशद्रात्रात् ३५ चतुस्त्रिंशद्रात्रमन्नाद्यकामानाम् ३६ षट्त्रिंशद्रात्रं प्रतिष्ठाकामानाम् ३७ सप्तत्रिंशद्रात्रमृद्धिकामानाम् ३८ अष्टात्रिंशद्रात्रं प्रजाकामानां पशुकामानां वा ३९ चत्वारिंशद्रात्रं च ४० व्रतवन्त्युत्तराणि प्रथमतृतीयवर्जं सप्तैकान्नपंचाशद्रात्राणि ४१ प्रथमो विधृतिः ४२ अषोडशिकावतिरात्रौ ४३ २ 24.2

कौसुरुबिन्दः प्रथमस्त्र! यह उक्थ्यौ तूत्तरौ १ षोडशिदशमा उक्थ्याः २ पृष्ठ्यं चाभितो द्वादश द्वादश ३ वर्गान्तरेष्वतिरात्राः ४ यमातिरात्रम् ५ अभिप्लवौ गोआयुषी अतिरात्रावभिप्लवावभिजिद्विश्वजितावतिरात्रा-वभिप्लवः सर्वस्तोमनवसप्तदशावतिरात्रौ ६ आंजनाभ्यंजनीयेऽभिप्लवाः षट् ७ चतुर्भ्यः सर्वस्तोमोऽतिरात्रः ८ तस्मिन्नुपसत्सु सर्पिर्विपचेयुर्गा-र्हपत्ये गुल्गुलुसुगन्धितेजनपीतुदारुभिः ९ यथासवनन्तैः सवनेष्वांजना-भ्यंजने कुर्वीरन्नाग्नीध्रेऽहरहः १० पृष्ठ्ये वा ११ सवनमुखीयेषु भक्षयिष्यन्तो वा १२ य आत्मानं नैव जानीरंस्तेषामेतत् १३ संवत्सरसम्मिते चतु-र्विंशमहः १४ अभिप्लवाश्चत्वारः १५ गोआयुषी त्रिभ्यो विषुवन्मध्यो नवरात्रः १६ एकषष्टिरात्रे पृष्ठ्यो नवरात्रमभितः १७ प्रतिलोमः परः १८ सवितुः कुभः १९ नवरात्राश्चत्वारः २० अग्निष्टोमाः प्रथमसप्तमोत्तमा नववर्गाणामुक्थ्या इतरे २१ परे षडभिप्लवे २२ पूर्वस्य चतुर्भ्यो व्रतम् २३ प्रजातिकामानामेतत् २४ प्रकृतिविहितं शतरात्रं चतुर्दशाभिप्लवं चतुरहश्च २५ सदोहविर्धानानि चक्रीवन्ति २६ अभिप्रयायमभिषुण्वन्ति देशानुपरोधेन २७ अहरहरभिप्लवेषु त्रिकद्रुकेषु वा २८ अभिप्लवा-भ्यासेनाभिपूरणम् २९ सकृत्प्रयोगी दशरात्रः ३० व्रतवन्ति सर्वजिद्दीक्षाणि । सप्तदशरात्रादीनि त्रिंशदन्तान्येक एकान्नपंचाशद्रा त्रे चाष्टादशदीक्षाणि पर्णमासीप्रक्रमाणि ३१ शतातिरात्रेऽहानि शतरात्रसामान्यात् ३२ द्वादशाहाद्यं वा तत्प्रकृतेः ३३ शताग्निष्टोमे शतोक्थ्ये च ३४ आश्विनस्याग्नेयान्ते प्रतिप्रस्थास्ता व्युत्क्रामतादि कृत्वा मैवावरुणाय प्रातरनुवाकमुपा-कृत्यान्तर्यामं हुत्वा प्रपीड्य पवित्रं द्रो णकलशे निदधाति ३५ सशषं होतृचमसम् ३६ तिरोऽह्न्यादि करोति पूर्वस्याह्नः ३७ ग्रहग्रहणाद्या विप्प्रुड्ढोमात्कृवा ३८ ३ 24.3

सवनसन्तनिं जुहोत्यग्निः प्रातःसवन इति १ संवत्सरप्रभृतीनि गवामयन-प्रकृतीनि तद्गुणदर्शनात् २ आदित्यानामयनेऽभिप्लवास्त्रिवृत्पञ्चदशस्तो-माः ३ मासाः पृष्ठ्यमध्याः ४ बृहस्पतिसवोऽभिजित्स्थाने ५ इन्द्र स्तोमो विश्वजितः ६ विश्वजितः परे ये त्रयोऽभिप्लवास्तेषामुत्तरयोः स्थाने त्रिवृतो-ऽग्निष्टोमा दश ७ उद्भिद्बलभिदौ च ८ षष्ठतासादौ मध्यमस्थाने पृष्ठ्यः ९

दशरात्रस्य छन्दोमदशाहः १० अङ्गिरसामयनमादित्यानामयनवत् ११ अभिप्लवास्त्रिवृतः १२ मासाः पृष्ठ्यादयः पूर्वपक्षे १३ प्रतिलोमाः परे १४ योऽभिप्लवमध्ये पृष्ठ्य उत्तमः सः १५ गोआयुषी प्रतिलोमे १६ छन्दोमदशाहश्च १७ दृतिवातवतोरयनमेकैकेन पृष्ठ्यस्तोमेन मासं मासम् १८ एकाहास्तच्छब्दात १९ नानाऽहानि वा सङ्घातशब्दात् २० मध्ये व्रतम् २१ उत्तरपक्षे प्रतिलोमम् २२ कुण्डपायिनामयनं पौर्णमासीदीक्षम् २३ चतुर्थ्यां वाऽपरपक्षस्य २४ मासं दीक्षाः २५ सोममुपनह्य सुत्या-स्थानेषु मासमग्निहोत्रं जुह्वति २६ दर्शपूर्णमासाभ्यां मासम् २७ पक्षादौ यद्यद्धविस्तत्सर्वस्मिन् २८ सारस्वते च प्रथमे २९ तन्त्रेण वा समस्त-चोदितत्वात् ३० अग्निहोत्रं च ३१ पृथङ्मासाश्चातुर्मास्यपर्वभिः ३२ साकमेधा दर्शपूर्णमासवत् ३३ सोमा वा सामान्यात् ३४ न जुहोतिशब्दात् ३५ काममितरे ३६ दृतिवातवतोरयनपूर्वपक्षेण षण्मासान् ३७ उत्तमे त्रयोऽभिप्लवा दशरात्रो महाव्रतम् ३८ उपरिष्टादतिरात्र भवति ३९ उभयतो वा ४० हविर्यज्ञेभ्योऽतिरात्रमेके सोमानन्तर्यात् ४१ अत्सरुकाः कुण्ड-प्रतिरूपाश्चमसाः ४२ पंचर्त्विजस्त्रीणि त्रीणि कर्माणि कुर्युः ४३ होता-ध्वर्यवपोत्रीये च ४४ उद्गाता नेष्ट्रच्छावाकीये ४५ मैत्रावरुणो ब्रह्म-त्वप्रातिहर्त्रे ४६ प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये ४७ प्रतिप्रस्था-ताग्नीध्रोन्नेत्रे ४८ मुख्यासनेभ्योऽनुसंसर्पमितराणि ४९ सर्पसत्रं व्यत्यासं विराट् कौसुरुबिन्दुद्वितीयं च ५० गवामयनं वाभिगरश्रुतेः ५१ ४ 24.4

तापश्चितं दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः १ गवामयनेनेयुः २ अग्निष्टोमेन वा ३ सर्वजिदभिजिद्विश्वजितां वैकैकेन ४ त्रिकद्रुकैर्वा ५ महातापश्चितं त्रिषंवत्सरोपसत्कम् ६ तुल्यमन्यत् ७ क्षुल्लकतापश्चिते चतुर्मासशो दीक्षोपसत्सुत्यानि ८ विषुवन्तमभितो गवामयनपक्षयोः प्रथमोत्तमौ प्रथमोत्तमौ ९ सहस्रसाव्यमग्नेः १० अभिप्लवानां चतुःषष्टं शतं चतुरहश्च ११ त्रिषंवत्सरं षष्टिदीक्षम् १२ यथाशक्ति वा १३ आदितस्त्रयः संवत्सराः सौत्याः १४ महासत्त्राण्यतः १५ चतुर्भागं चतुर्भागमेकैकस्य ज्यौतिष्टोमिकैः स्तोमैः १६ तेष्वतिरात्रविषुवन्तः स्युर्वा न वा १७ आद्यन्तयोर्वाऽतिरात्रौ विषुवांश्च मध्ये मध्ये १८ द्वादशसंवत्सरं प्रजापतेः १९ षट्त्रिंशत्संवत्सरं शाक्त्यानां तरसमयाः पुरोडाशाः २० सर्वत्राविशेषात् २१ सवनीया वा बहुश्रुतेः २२ शतसंवत्सरं साध्यानाम् २३ सहस्रसंवत्सरं विश्वसृजाम् २४ यात्सत्राणि सारस्वतानि २७ सदोहविर्द्धाप्ताग्नीध्राणि चक्रीवन्ति २६ उलूखलबुघ्नो यूपः प्रकृष्यः २७ वत्सतरीशतमृषभाधिकं गर्भिणीनामुत्सृजन्ति सहस्रपूरणाय २८ उपकि-रन्त्युपरवस्थानेषु न खनन्ति २९ शुक्लपक्षसप्तम्यां दीक्षा सरस्वतीविनशने ३० द्वादशाहवद्दीक्षोपसदः ३१ अषोडशिकावतिरात्रौ ३२ तत्रैव प्रायणीयोऽतिरात्रः ३३ सान्नायञ्च तस्मिन् ३४ सं स्थितेऽध्वर्युराहवनीयसमीपे स्थित्वाभ्यध्वं शम्यां प्रास्यति तद्गार्हपत्यस्थानम् ३५ यथोक्तमाहवनीयस्य ३६ ५ 24.5

यथास्थितं यज्ञाङ्गानि हरन्ति १ पांसूनादाय भौमानां यथादेशं निवपन्ति २ यजनीययोरह्नोर्गोऽआयुषी ३ पर्वान्तरेषु दर्शपूर्णमासौ ४ शम्याप्रासे शम्याप्रासे वसन्तो यजमानाश्च यन्ति दक्षिणेन तीरेण ५ दृषद्वत्यप्यये-ऽपोनप्त्रियश्चरुः ६ अग्नये कामायेष्टिः ह्प्लक्षे प्रास्रवणे ७ तस्यामश्वपुरुष्यौ धेनुके दद्युः ८ अवशिष्टं चैके यज्ञोपकरणमुदयनीयान्ते ९ अवभृथमभ्य-वयन्ति यमुनां कारपचवं प्रति १० पुरस्ताद्वाऽवभृथादग्नये कामाय ११ उदवसानीयान्ते वा १२ यथार्थं विप्रव्रजेयुः १३ अपृष्ठशमनानि सार-स्वतानि १४ त्रीण्येषां साम्युथानान्यतिरात्रैः सहस्रपूरणगृहपतिमरण-सर्वज्यान्यः १५ सहस्रपूरणे गौः १६ तदेव दत्त्वा १७ आयुर्गृहपतिमरणे १८ सर्वज्यान्यां विश्वजित् १९ ज्योतिष्टोमो वा सर्वेषाम् २० नावभृथं सरस्वत्याम् २१ परिपार्श्वेषूदकेषु २२ असत्सूद्धृत्य ततः २३ द्वितीये दृतिवातवतोरयनस्याहनी त्रिवृत्पंचदशस्तोमे पर्वान्तरेषु व्यत्यासम् २४ तयोश्चेदसमाप्तयोरागच्छेद्यजनीयकालस्तमुपेत्य शेषमनु समापयेयुः २५ शुक्लपक्षश्चेत्त्रिवृदग्निष्टोम इत्यके पंचदश उक्थ्यः कृष्णे २६ तृतीये यजनीययोरह्नोरभिजिद्विश्वजितौ २७ पर्वान्तरेषु त्रिकद्रुकाः २८ पूर्व-वदनुसमापनम् २९ चार्षद्वतमृत्विगाचार्ययोरन्यतरस्य गा रक्षेत्संवत्सरम् ३० अपरं व्यर्णे नैतन्धवेऽग्निमिन्धीत ३१ कुरुक्षेत्रे परिणहिस्थलेऽग्न्याधेय-मन्वारम्भणीयान्तं भवति ३२ दर्शपूर्णमासान्तं वा ३३ आहिताग्निश्चेद व्यर्णेऽग्निहोत्रमेव जुहुयात् ३४ पुरोडाशोऽग्नये तेन यजमानः पूर्ववत् ३५ एत्य च दृषद्वतीतीरेणावभृथमभ्यवयन्ति यमुनां त्रिप्लक्षावहरणं प्रति ३६ स्वयमेव सामगानम् ३७ आप्लवनमात्रं वा ३८ उदेत्यैतयैवेष्ट्या यजेत ३९ पशुना वा तद्देवतेन ४० अग्निष्टोमेन वा ४१ ६ 24.6

तुरायणं वैशाखीशुक्लस्य पंचम्याम् १ चैत्रस्य वा २ प्रातराहुत्यन्तेऽदीक्षितो दीक्षारूपाण्यासजते तूष्णीं कृष्णाजिनादीनि ३ हवींषि निर्व-पत्याग्नेयमैन्द्र वैश्वदेवं चरुं सवनकालेष्वेकैकम् ४ तन्त्रेन वा ५ अन्वहम् ६ वा हविःशेषभक्षः ७ संवत्सरं यजते ८ अनियतोदकं दार्ष-द्वतवदवभृथादि ९ द्वादशाहविकल्पाः १० सर्वाग्निष्टोमो भरतद्वादशाहः ११ संक्रमद्वादशाहे दशरात्रस्य त्र! यहप्रथमानि प्रथमस्त्र! यहः १२ त्र! यह-द्वितीयानिः द्वितीयत्र्यहस्त्र्यहतृतीयानि तृतीयस्त्र! यहः १३ प्रकृत्या दशमम् १४ अग्निष्टुदिन्द्र स्तुत्सूर्यस्तुद्वैश्वदेवस्तुतां वैकैकेन १५ त्रिकद्रुकैर्वा-ऽहीनैकाहानां वैकैकेनाप्तोर्यामराजसूयवर्जम् १६ गोऽआयुर्भ्यां वा १७ अभ्यासानुपपत्तौ ज्योतिष्टोमः पूरणः १८ यथोक्तस्य स्तोत्रं स्तोत्रियं वर्चं वा साम वा यजुर्वाऽहर्वाऽन्यत्कृत्वा यजेत १९ व्यत्यासमन्ततः २० नास्त्येषामन्तः २१ अयनमुत्सर्गिणां गवामयनविकल्पाः २२ पंचो-क्थ्यांस्त्रीनभिप्लवानुपेत्य चतुर्थं चतुरुक्थ्यमुपयान्ति २३ स्तोमोत्सर्गो वैकस्याह्नः २४ पशोर्वा सवनविधिक्रिया २५ अनारम्भो वा २६ तापश्चितविकल्पः २७ अयमेव प्रायणीयोऽतिरात्रः सर्वं सत्त्रं स्याद्यथोक्तपृष्ठः २८ अथापरम् २९ ज्योतिष्टोमाश्चत्वारोऽभिजितैः षण्मासान् ३० व्रतं विषुवत्स्थाने ३१ विश्वजिज्ज्योतिष्टोमाश्चत्वारस्तैरुत्तमान् ३२ एतत्पुरुषस्य नारायणस्योत्तममेतत्पुरुषस्य नारायणस्योत्तमम् ३३ ७ 24.7

कर्मोपपाते प्रायश्चित्तं तत्कालम् १ चोदना वाऽकालशब्दात् २ कालो वा प्रत्ययात् ३ महाव्याहृतिहोमोऽनादेशे ४ हौत्रिके भूरिति गार्हपत्ये ५ दक्षिणाग्नावाध्वर्यवे भुव इति ६ आग्नीध्रीये सोमे ७ स्वरित्यौद्गात्र आहवनीये ८ चतुर्गृहीतान्येतानि सर्वत्र ९ सर्वप्रायश्चित्तं च पंचभिः प्रत्यृचम् १० त्वन्नोऽअग्ने इति द्वाभ्याम् याश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्वमयाऽअसि । अया नो यज्ञं वहास्यया नो धेहि भेषजं स्वाहा ये ते शतं वरुण ये सहस्रं ये यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुंचन्तु मरुतः स्वर्काः स्वाहोदुत्तममिति च ११ अविज्ञाते प्रतिमहाव्याहृति सर्वामिश्चतुर्थं सर्वप्रायश्चित्तं च १२ अग्निहोत्री चेद्दुहोनोपविशेद् यजुषोत्थापनमेकऽउदस्थाद्देव्यदितिरायुर्यज्ञपतावधादिन्द्राय कृण्वती भागं मित्राय वरुणाय चेति १३ दुग्ध्वा ब्राह्मणायैनां दद्याद्यमनभ्यागमिष्यन्त्स्यात् १४ दण्डेन वाऽनुपिष्योत्थाप्य वा दोहनम् १५ अदानं च १६ अदुहानायामन्याम् १७ वाश्येत चेत्तृणान्यालुप्य ग्रासयेत्सूयवसाद्भगवति हि भूया अथो वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तीति १८ १ 25.1

तस्यै पयसा जुहोति १ लोहितदोहे दक्षिणाग्निं परिश्रित्य व्युत्क्रामतेत्युक्त्वोष्णे भस्मनि रुद्राय हुत्वा पूर्ववद्दानम् २ हौम्यं गवि सद्रौद्र म् ३ उपसृष्टं वायव्यम् ४ दुह्यमानमाश्विनम् ५ दुग्धं सौम्यम् ६ अधिश्रितं वारुणम् ७ उदन्तं पौष्णम् ८ विष्यन्दमानं मारुतम् ९ बिन्दुमत्सारस्वतम् १० शान्तं मैत्रम् ११ उद्वास्यमानं सवितुः १२ उद्वासितमदितेः १३ उन्नीयमानं वैश्वदेवम् १४ उन्नीतं बार्हस्पत्यम् १५ प्रह्रियमाणं धात्रम् १६ प्रहृतं वैश्वकर्मणम् १७ अन्तराग्नी वैश्वानराय १८ उपसन्नं द्यावापृथिव्योः १९ पूर्वाहुतिरिन्द्रा ग्न्योः २० उत्तरा प्रजापतेः २१ हुतमैन्द्रम् २२ यथाकालोपपाते तद्देवते तद्देवतं हुत्वा तद्वाऽतिदिश्यान्येन जुहुयात् २३ स्कन्देच्चेदस्कन्नमधित प्राजनीत्यभिमृश्य शेषेण जुहुयात् २४ भिद्येत चेदवापद्येत स्कन्नप्रायश्चित्तेनाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपाला-नि भस्मोद्वापे कुर्यात् २५ भुवपतय इति हाविर्यज्ञियम् २६ देवान्दिवमगन्निति सोमे २७ ययोरोजसेति वोदकेनोपसिंचेत् २८ उन्नीतसर्वस्कन्दनस्रुग्भेदयोस्तत्रैवासनम् २९ अन्यदुन्नीयान्योऽस्मै प्रयच्छेत्तेन होमः ३० २ 25.2

पूर्वाहुतौ हुतायां चेदाहवनीयोऽनुगच्छेत्तदुक्तम् १ काष्ठं हिरण्यं वाभिजुहुयाच्छ्रुतेः २ त्रिरुद्धृतश्चेदाहवनीयोऽनुगच्छेदुदक्स्थानान्युपलिप्य नि-र्मथ्य सकृदुद्धृते तस्मिन्त्सायंप्रातर्होममेके ३ गार्हपत्येऽनुगते भस्मनाऽरणी संस्पृश्य मन्थनम् ४ आहवनीयजागरणे वा तत एवोद्धरणम् ५ आहृत्य वा ६ उपलराज्यागताद्वा ७ निर्मन्थ्य वा ८ समारोह्यासमारोह्य वा पूर्वमुपशमय्य पूर्ववद्धोमः ९ त्रिराहृतो दक्षिणाऽग्निरनुगच्छेच्चेदनाहरणमस्य तदहरेके १० जाग्रतमाहवनीयमभ्युद्धरेच्चेत्तदुक्तम् ११ पश्चान्निधाय पुरस्ताद्वोभयत्र होममेके १२ अभिनिधानेऽग्नयेऽग्निमते पुरोडशः १३ समितमिति वोपस्थानं द्वाभ्याम् १४ गृहीतानुगमने चान्वग्निरित्याहृत्य १५ अनादेशे पुरोडाशः सर्वत्र १६ अनुद्धृताभ्यस्तमये कुशबद्धे हिरण्ये पश्चाद्ध्रियमाण इध्मेनोऽद्धरेदार्षेयो ब्राह्मणः १७ वैष्णव्याहुतिः १८ अग्नये च सूर्यवते १९ अभ्युदये रजतधारणं पुरस्तात् २० वैश्यदेव्याहुतिः २१ सूर्याय च ज्योतिष्मते २२ समानमुद्धरणम् २३ वैश्वदेवी वोभयत्रापुरोडाशा २४ उभयानुगमने पुनराधेयं वा २५ भेदेनाप्युपपात् २६ न सह प्रकृप्तेः २७ ३ 25.3

मथ्यमानश्चेन्न जायेत यमदूरात्पश्येत्तमाहृत्याभिजुहुयात् १ ब्राह्मणहस्ते वा २ वासानपनोदश्च ३ अजकर्णे वा दक्षिणे ४ अभोजनं तस्य ५ कुशस्तम्बे वा ६ अनासनं तस्मिन् ७ अप्सु वा ८ नाद्भ्यो बीभत्सेतेति श्रुतेः ९ अहुताम्युदित उन्नीयातमितोरासीत १० हुत्वा भूरित्यनुमन्त्रणम् ११ वरदानं च १२ सर्वनाशे हविषां दोषे वा तदुक्तम् १३ आज्येन वा प्रतिसंख्याय देवतेज्या १४ पुनः क्रिया च १५ भेदे विप्रक्लृप्त्युपपाताभ्याम् १६ अन्तरा गमनेऽनाद्रियते १७ श्वैडवराहेषूदधारा प्राचीदं विष्णुरिति १८ भस्मनो वा १९ चक्रीवत्यग्नये पथिकृते २० प्रज्ञातेष्ट्यतिपत्तौ च २१ नियता-स्वतिपत्तिश्रुतेः २२ स्तोत्रमोहे शस्त्रस्य च २३ जनमरणे च २४ उप-पातसामर्थ्यात्स्वजने २५ आहिताग्नेरार्त्यश्रुकरणेऽग्नये व्रतभृते २८ संसर्गे नाद्रियेत २९ अनुक्रोशेऽग्नये संसर्गायाहुतिर्वा ग्रामाग्निना चेत् ३० अग्नये विविचये मिथश्चेत् ३१ अग्नये संवर्गाय प्रदव्याच्चेत् ३२ अग्नयेऽप्सुमते वैद्युताच्चेत् ३३ अग्नये शुचयेऽशुच्यायतनाच्चेत् ३४ भार्यागोषु यमजनने मारुतं त्रयोदशकपालं निर्वपेत् ३५ गेहदाहेऽग्नये क्षामवते पुरोडशः ३६ चन्द्र मसाभ्युदित आमावास्ये पुरस्तात्तद्व्रतः स्यात् ३७ दधि हविरातंचनं निदध्यात् ३८ संसृज्य वत्सान्पुनरपाकरणम् ३९ निरुप्ते व्रताशक्तौ वा त्रैधं तण्डुलान्विभज्य मध्यमानग्नये दात्रे स्थविष्ठानिन्द्रा य प्रदात्रे दधनि चरुमणिष्ठान्विष्णवे शिपिविष्ठाय शृते चरुम्

४० संस्कारात्सान्नाय्यम् ४१ अन्यद्वेज्यायोगात् ४२ तस्य तण्डुलापनयो वचनात् ४३ प्रकृत्या पूर्वम् ४४ सर्वं वा निमित्तात् ४५ पश्चादभ्युद्दृष्ट आमावास्येनेष्ट्वा तदहर्वैव श्वो वाऽग्नये पथिकृत इन्द्राय वृत्रघ्न एकादशकपालो वैश्वानरश्च ४६ त्रीषुकं धनुर्दक्षिणा ४७ दण्डो वा ४८ प्राकृताश्चेच्छन् ४९ अनभ्युद्दृष्टस्यापि पशुकामस्य ५० ४ 25.4

उद्वास्यमानं चेत्कपालं नश्येदाश्विनः १ सायं प्रातर्दोहात्तावैन्द्रं पंचशरा-वमोदनं निर्वपेत् पुरोडाशं वा २ भेदेनाप्युपपातात् ३ तत्प्रतिनिधिः ४ प्रायश्चित्तं वा देवताश्रुतेः ५ चरू सान्नाय्यालाभे ६ सायं दोहस्थाने वा पुरोडाशः ७ असान्नाय्यवद्वा ८ दुष्टस्य हविषोऽप्स्ववहरणम् ९ उष्णे वा भस्मनि १० शिष्टभक्षप्रतिषिद्धं दुष्टम् ११ एकस्यानिष्टे तदुक्तम् १२ सान्निपातिकानि वा तस्य १३ इष्टं चेदाज्येन शेषम् १४ हविरन्तरेण प्राक्प्राधानेज्यायाः स्मृत्वान्वाहरेत् १५ प्राग्वा समिष्टयजुषः संस्थाश्रुतेः १६ हुतं चेत्संस्थाप्य तदेव पुनर्निर्वपेत् १७ देवताविपर्यासे पुष्कलं दत्वा यथानुपूर्व्यकरणम् १८ अवदानयाज्यानुवाक्यासु च १९ स्रुच्ये दुष्टे पुनर्ग्रहणम् २० ध्रुवाया वा ततो यज्ञः प्रभवतीति श्रुतेः २१ अदुष्टाद्वानयनमेके २२ नोपभृतो ध्रुवायाम् २३ आज्यस्थालीदोषेऽन्यत् २४ अदोषो वा न वै देवाः कस्माच्चन बीभत्सन्त इति श्रुतेः २५ अधिकं निरूप्य तच्च यजेत् २६ न वाचोदितत्वात् २७ ऐतु राजावरुणो रेवतीभिरास्मिन्स्थाने तिष्ठतु मोदमानः । अरिष्टा अस्माकं वीरा मा परासेचि मत्पय इति प्रणीता स्कन्ना अभिमृशेत् २८ भूमिर्भुमिमवागात्माता मातरमप्यगात् । भूयाम पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति मृन्मयं भिन्नमभिमृशेत् २९ य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः सन्धाता सन्धिं मघवा पुरुवसुरिष्कर्ता विह्रुतं पुनरिति च घर्म्यम् ३० ५ 25.5

परमेष्ठ्यादींश्च चतुस्त्रिंशतं जुहोति १ घर्मघुग्ध्वाले चादोहे चौदीच्या २ दोहस्थानेऽन्यस्याः ३ शालाया वा पुरस्तात्प्राच्याः ४ पुच्छकाण्डा-द्दक्षिणेऽस्थनि हुत्वा दोहयेत् ५ पृषदाज्यस्कन्दने चैके ६ सोमज्योपपाते चैकेकां यथाकालं हुत्वा यज्ञस्य दोह इति वाचयति आग्नीध्रीये सुत्यासु ७ आपवस्व हिरण्यवदित्युद्गातृहोमो ध्वाङ्क्षारोहणे यूपस्य ८ पृषदाज्यस्कन्दने जुहुयादयाविष्ठा जनयन्कर्पराणि स हि घृणिरुरुर्वराय गातुः स प्रत्युदैद्धरुणो मृध्वोऽग्रं स्वायां यत्तन्वां तनूमैरयत स्वाहेति ९ घर्मधुक्शार्दूलहता चेत्स्पृतीर्जुहुयात् चन्द्रा त्ते मन स्पृणोमि स्वाहा सूर्यात्ते चक्षु स्पृणोमि स्वाहा वातात्ते प्राणान् स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रं स्पृणोमि स्वाहाऽद्भ्यस्ते लोहितं स्पृणोमि स्वाहा पृथिव्यै ते शरीरं स्पृणोमि स्वाहेति १० हुत्वान्यामाजतेति ब्रूयात् ११ स्वयं होम्यशक्ता उपासीत १२ उपसर्पणाशक्तावासनमधः १३ ६ 25.6

सायमाहुत्यां हुतायां चेद्दुर्बलः स्यात्तदैव प्रातराहुतिस्तत्संस्थाश्रुतेरग्नि-होत्रस्य १ जीवेच्चेत्पुनः काले २ न वा कृतत्वात् ३ पौर्णमासान्ते चामावास्यमग्निहोत्रवत् ४ हविष्येषु चेदाह्रियमाणेषु मरणं दक्षिणाग्ना-वेनान्त्सन्दहेत् ५ न वाऽयुक्तत्वात् ६ गार्हपत्ये ग्रहणादि प्रागासादनात् ७ आसादनाद्याहवनीये ८ मरणान्तं भवति ९ संस्थाप्यं वा प्रक्लृप्तत्वात् १० हविष्यवद्धौम्यम् ११ सन्दीपनवतीः प्रत्यग्न्यधिश्रयत्युखाः १२ सन्तापजानग्नीनादाय सशरीरा दक्षिणा गच्छन्ति १३ अनसा १४ वितानं साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति १५ उद्धृत्यक्षीरिणा पुरुषाह्वतीः १६ विशाखशराश्मगन्धापृश्निपर्ण्यध्याण्डाश्च १७ केशश्म-श्रुनखलोमनिकृन्तनानि कृत्वा विपुरीषं चेच्छन् १८ केशादि निखाय सर्पिषान्तरक्त्वा चितावेनमादधाति कृष्णाजिनमास्तीर्य प्राक्शिरसम् १९ सप्तसु प्राणायतनेषु सप्तहिरण्यशकलान्प्रास्यति मुखे प्रथमम् २० दक्षिण-हस्ते जुहूं सादयति घृतपूर्णाम् २१ स्फ्यं च २२ उपभृतं सव्ये २३ उरसि ध्रुवाम् २४ मुखेऽग्निहोत्रहवणीम् २५ नासिकयोः स्रुचौ २६ कर्णयोः प्राशित्रहरणे शिरसि चमसं प्रणीताप्रणयनम् २७ कपालानि चैके २८ पार्श्वयोः शूर्पे २९ उदरे पात्रीं समवत्तधानीं पृषदाज्यवतीं शिश्ने शम्यामरणी वृषणयोः ३० अन्तरोरू यज्ञपात्राण्यन्यानि ३१ अप्स्ववहरणं मृन्मयाश्म-मयानाम् ३२ अयस्मयानि वा ब्राह्मणाय दद्यात् ३३ अनुस्तरणी चेत्पश्चा-त्कर्णमाहत्य हस्तयोर्वृक्कौ ३४ अङ्गेष्वङ्गानीति जातूकर्ण्यः ३५ न वाऽस्थिसन्देहात् ३६ वपया मुखमवच्छाद्याग्निभिरादीपयन्ति ३७ आहुतिं जुहोति पुत्रो भ्राताऽन्यो वा ब्राह्मणोऽस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः असौ स्वर्गाय लोकाय स्वाहेति ३८ अनपेक्षमेत्योपस्पृशन्त्यपः ३९ ७ 25.7

संचयनं चतुर्थ्यामयुग्मान् ब्राह्मणान्भोजयित्वा पलाशवृन्तेनास्थीनि परि-वर्त्य परिवर्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रास्यति १ शम्या-वकाः कर्दमं च श्मशाने २ अक्त्वास्थीनि सर्वसुरभिमिश्राणि दक्षिण-पूर्वायतां कर्षूं खात्वा कुशानास्तीर्य वस्त्रावकृतं च हारिद्रं वागिति निवपत्यस्मिन् ३ एतद्वाजसनेयकम् ४ अनेन वा ५ त्वा मनसानार्तेन वाचा ब्रह्मणा त्रय्या विद्यया पृथिव्यामक्षिकायामपांरसेन निवपाम्य-साविति ६ श्मशानं चिकीर्षतः कुम्भे संचयनम् ७ निधानं च तूष्णीम् ८ प्रोषितश्चेत्प्रेयात्प्राचीनावीती निवान्यां दुग्ध्वा दक्षिणतोऽधिश्रयणोद्वासने ९ तत एव हरणम् १० अधस्तात्समिधे धारयन् ११ उदगग्रान् कुशान् दक्षिणाग्रान् कृत्वा १२ सकृद्वा पितृवत्पर्यस्य १३ शरीराण्याहृत्य कृष्णाजिने पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य पूर्ववद्दाहः १४ शरीरनाशे त्रीणि षष्टिशतानि पलाशवृन्तानां कृष्णाजिने पूर्ववत् १५ अनिष्ट्वाग्रयणेन नवस्याश्नीयाद्भुक्त्वा पतितस्य प्रतिगृह्य विद्विषाणयोर्वाऽयाज्यं याजयित्वाविं प्रतिगृह्योभयाददद्वा यस्याग्निभिरन्यं याजयेयुर्यो वा यजेत वैश्वानरं निर्वपेत् १६ कृष्णं वासो दक्षिणा १७ पुरोडाशे क्षामेऽवशिष्टं समाप्य तदेव पुनर्निर्वपेत् १८ एकदेशदग्धेऽपि संयोगात् १९ दर्शनाच्च २० न नित्यत्वात् २१ कर्मार्थं दर्शनम् २२ ८ 25.8

पशुश्चेदुपाकृतः पलायते वायवे तमनुदिश्यान्यं तद्वर्णं तद्वयसमालभेत १ उपलभ्य वायवे तम् २ अनादरणं वा ३ प्राक् प्रयाजेभ्यश्चेन्नियुक्तो म्रियेतान्यमालभेत ४ पूर्वस्य वपां दक्षिणाग्नौ जुहुयात् ५ सोमश्चे-न्मार्जालीये ईजानाः पितरो ये पितामहा येऽनीजाना यज्ञियाः सोम-पास्तेषामेष पशुरालब्धोऽग्नौ स्वाहा देवेभ्यः सुहुतो यमायेति ६ अनपनयो वाऽदुष्टत्वात् ७ अवदानहानौ नाद्रि येत ८ हृदयनाशे त्वन्यमालभेतेत्येके हृदयं पशुरिति श्रुतेः ९ सर्वेषां वाज्यस्य यजेत् १० अर्थवादमात्रं पशुवचनम् ११ संज्ञप्यमानश्चेद्वाश्येताहुति जुहुयाद्यत्पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस इति १२ इमं मे वरुणेति च प्रत्यृचं द्वाभ्याम् १३ पशूखाचेत्स्त्रवेत्सान्नाय्योखा वा तामभिमन्त्रयते ओखां स्त्रवन्तीमगदामगन्म त्वष्टा वायुः पृथिव्यन्तरिक्षम् । यतश्चुतद्धुतमग्नौ तदस्तु न तत्प्राप्नोति निरृतिः परस्तादिति १४ ९ 25.9

यूपविरोहणेऽन्तस्तन्त्रं संस्थितेऽहनि । त्वाष्ट्रं बहुरूपमालभेत १ अनूबन्ध्यायै वपामुत्खिद्यानुमर्शं गर्भमेष्टवै ब्रूयात् २ दर्शने स्थालीं चैवोष्णीषं चोपकल्पयितवै ब्रूयात् ३ वपान्तेऽनपेक्षमध्वर्युः प्रेष्यति निरुहैतं गर्भमिति विरुज्य श्रोणी प्रत्यंचं निरुहितवै ब्रूयात् ४ निरुह्यमाणमभिमन्त्रयत एजतु दशमास्य इति पशुवदवदानं गर्भस्य ५ कण्ठं वावकृत्य स्थाल्यां मेधस्रावणम् ६ अवदानसहितमधिश्रित्योष्णीषवेष्टितं गर्भं पार्श्वतो निदधाति अनभिघारितमवदानवद्धुत्वा दक्षिणतो मेधं निदधाति ७ प्रतिप्रस्थाता वशावदानकाले प्रचरण्यां मेधमवद्यति ८ अवदानान्यनु जुहोति यस्यै त इति ९ अङ्गान्यहुता यस्य यस्या इति यथालिङ्गम् १० अविज्ञाते पुंवत् ११ स्विष्टकृद्वनस्पत्यन्तरे प्रत्येत्य प्रतिप्रस्थाता प्रचरण्यां सर्वं मेधमवद्यति १२ स्विष्टकृतमनु जुहोति पुरुदस्म इति १३ स्विष्टकृदन्त उष्णीषवेष्टितस्य वृक्षासंजनं वाप्स्ववहरणं वाखूत्करोपकिरणं वा १४ अनुव्याहारभयं त्वेतेषु १५ समिष्टयजुरन्ते शामित्र एव जुहुयात्तिष्ठन्मरुत इत्यस्वाहाकृत्या महीद्यौरित्यङ्गारैरभ्यूहति १६ अग्निहोत्र आसन्नेषु चेत्पा-त्रेष्वाहवनीयोऽनुगच्छेद्गार्यपत्ये जुहुयात्प्राण उदानमप्यगादिति १७ गार्य-पत्यश्चेदाहवनीय उदानः प्राणमप्यगादिति १८ दक्षिणाग्निश्चेद्गार्हपत्ये व्यान उदानमप्यगादिति १९ सर्वे चेत्तूर्णं मथित्वा प्रतिवातमुद्धृत्य वायव्या-माहुतिं हुत्वा यथानुपूर्व्यकरणम् २० निवातं चेत्पूर्ववन्मथित्वा प्रांचमुद्धृत्य गार्हपत्ये संस्कृत्य पश्चादावहनीयस्य स्वयं पानम् २१ अग्निहोत्रातिपत्तावाहुतिं जुहुयान् मनो ज्योतिर्जुषतामाज्यस्य विच्छिन्नं यज्ञं समिमं दधातु या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि हविषा घृतेन स्वाहेति २२ १० 25.10

सत्त्रायागूर्याअशक्तौ विश्वजिताऽतिरात्रेण यजेत १ सत्त्राङ्गं वागूर्णमात्रश्रुतेः २ निष्क्रयवादाच्च २ अ दीक्षितानां चेत्साम्युत्थानं जायेत सोमं विभज्य तेनैव सर्ववेदसेन सर्वपृष्ठेन यजेरन् ३ क्रीते विभागश्रुतेः ४ उपपा-ताद्वोभयतः ५ विभागः क्रियागुणत्वात् ६ अनीतासु चेद्दक्षिणासूद्गात्र-पच्छेदोऽदक्षिणं संस्थाप्य पुनराहारः ७ प्रस्तोता चेद् ब्रह्मणे वरं दत्त्वा पुनर्वरणम् ८ प्रतिहर्ता चेत्सर्ववेदसं देयम् ९ युगपच्चेद्विरोधाद्विकल्पः १० पूर्वदौर्बल्यमानुपूर्व्ये प्रकृतिवत् ११ यस्मिन्नहन्युद्गात्रपच्छेदोऽहर्गणे तस्यावृत्तिः १२ पत्न्युदक्या दीक्षारूपाणि निधाय सिकतास्वासी-तोपस्रवणात् १३ तिष्ठेत्सन्धिवेलयोः १४ वेदिसमीपे सुत्यासु १५ त्रि-रात्रान्ते गोमूत्रमिश्रेणोदकेन स्नापयित्वा परिधानादि करोति सन्निपातिकम् १६ प्रजातायाश्च दशरात्रादूर्ध्वं स्नानादि १७ न गर्भिणीं दीक्षये-ऽदित्येकेऽयज्ञिया गर्भा इति श्रुतेः १८ नानूबन्ध्याप्रकरणात् १९ दीक्षि-तोऽमनोज्ञं स्वप्नं दृष्ट्वा जपेत्पर्य्यावर्त्ते दुःस्वप्न्यात्पापः स्वप्नादभूत्यै ब्रह्मा-हमन्तरं करवे परः स्वप्नमुखा कृधीति २० इन्द्रि यं स्कन्नमद्भिरुप-सिंचेद्योमेऽद्य पयसो रसः परि दोषादुदर्पिथः अग्निहोत्रमिव सोमेन तमहं पुनराददे इति २१ उदकं चेत्तरेत्तदभिमन्त्रयेदुन्दतीर्बलं धत्तौजो धत्त सहो धत्त मा मे दीक्षां मा तपो निर्बधिष्ठेति २२ अववृष्टश्च २३ अमेध्यं दृष्ट्वा सूर्यमुपतिष्ठेताबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीदिति २४ शोणितं चेत्कुर्याद्रुद्रियाभ्योऽद्भ्यः स्वाहेति जुहुयात् २५ निष्ठीवेच्चेत् बीभत्साभ्योऽद्भ्यः स्वाहेति २६ धावेच्चेद्वायवे स्वाहेति २७ स्विद्याच्चेत्तपस्याभ्योऽद्भ्यः स्वाहेति २८ स्वप्याच्चेत्प्रजापतये स्वाहा २९ आर्त्यश्रुकरणे तृप्ताभ्योऽद्भ्यः स्वाहेति ३० छर्द्याविष्टः पयः पीत्वोदकं वा छर्दयीत निष्ठ्यूतवद्धोमः ३१ वयसाऽवप्रस्रुते चमसेऽन्तरिक्षेण पतति यातुधानप्रबोधितश्चमसं यमभ्यचुश्चुतदग्निष्टुच्छुन्धतादिह पुनः स्वाहेति ३२ अभ्युपाकृतचमसमुपस्थे कृत्वाग्न आयाहि वीतये गृणानो हव्यदातये नि होता सत्सि बर्हिषि स्वाहेति ३३ आग्नीध्रीये वा हिरण्यगर्भ इत्यृचः ३४ हुताहुतसंसर्गेऽङ्गारमन्तःपरिधि निर्वर्त्त्य ३५ ११ 25.11

कुशतरुणेन जुहोति हुतस्य चाहुतस्य चाहुतस्य हुतस्य च पीतापीतस्य सोमस्येन्द्रा ग्नी पिबतं १ सुतमिति वषट्कृते २ चुन्कुते स्वाहेत्यनुवषट्कृते ३ संसर्गकाले वोपपातसामर्थ्यात् ४ तस्य भक्षणं मा यजमानं तमो विदन्मर्त्विजो मा यः सोममिमं पिबा संसृष्टमभयं ऋतुमिति ५ अववृष्टभक्षणमिन्दुरिन्दुमवागात्तस्य त इन्द्र विन्द्र पीतस्येन्द्रि यावतो गायत्र-च्छन्दसः सर्वगणस्य सर्वगण उपहूतस्योपहूतो भक्षयामिति ६ त्रिष्टुप्छन्दसो जगच्छन्दस इति यथासवनम् ७ अच्छन्दसमेके ८ पतितं चमसमालभते-ऽस्कन्पर्जन्यः पृथिवीमस्कन् गामृषभो युवा अस्कन्नेमा विश्वा भूतानि प्रस्कन्नाज्जायतां हविरिति ९ उत्तरपूर्वे जुहोत्युपरवे चमसं दुष्टं प्रजापतये स्वाहेत्यथ येऽन्येऽनादिष्टास्तान्खरे जुहुयादग्नये वैश्वानराय स्वाहेति नाराशंसश्चेदुपवायात्तदुक्तम् १० अन्त्याद्वा ग्रहात्स्तोकमासिच्य भक्षयेयुः ११ कलशश्चेदुपवायात्क्षीरासेचनमेके १२ हिरण्यवद्वोदकम् १३ उन्नयने च १४ अद्रि भेदने मारुतेन ब्रह्मसाम्ना स्तुवीरन् १५ चतुस्त्रिंशद्धोमश्च १६ सोमापहरणे विधावतेच्छतेति ब्रूयात् १७ अदर्शनेऽरुणपुष्पाण्यर्जुनान्यभि-षुणुयात् १८ श्येनहृतं पूतीकानादारानरुणदूर्वा हरितकुशान्पूर्वालाभे पूर्वा-लाभ उत्तरान् १९ एकां गां दत्त्वा समाप्य पुनर्यज्ञः २० अवभृथान्ते वा श्रुतिसामर्थ्यात् २१ कलशभेदने वषट्कारनिधनं ब्रह्मसाम २२ अनुलि-प्सध्वमिति प्रेष्यति २३ यदनुलभेरंस्तदेकधनैरभ्युन्नीय प्रभावयन्तः प्रचरेयुः २४ आग्रयणाद्वाऽनुपलभमानेषु पूर्ववत् २५ अनीतासु चेद्दक्षिणासु भेदनं पूर्ववद्दत्त्वा तथैव यज्ञः २६ १२ 25.12

प्रातः सवनाच्चेत्सोमोतिरिच्येत तमुन्नीयोपाकरणमस्ति सोमो अयमिति १ मरुत्वतीषु गायत्रेण स्तुवीरन् २ ऐन्द्रा वैष्णवं होता शंसति ३ यस्मा-त्स्तोमादतिरिच्येत स एवं कार्यः सर्वत्र ४ माध्यन्दिनाच्चेत्पूर्ववदुपाकरणम् ५ बण्महअसीति बृहतीष्वादित्यवतीषु गौरीवितेन स्तुवीरन् ६ पूर्व-वद्धोता ७ तृतीयाँ सवनाच्चेद्विष्णोः शिपिविष्टवतीषु गौरीवितेन ८ एतत्कृत्वोक्थ्यं वा गृहीत्वा विगृह्णीयात् ९ उक्थ्याच्चेत्षोडशी कार्यः १० षोडशिनश्चेदतिरात्रः ११ अतिरात्राच्चेद्बृहत् १२ महाव्रतमेके यथोक्तम् १३ अप्तोर्यामो वा अन्त्याच्चेत्तस्यैवावृत्तिः १४ नातिरेकोऽस्तीति श्रुतेः १५ पूर्वात्सवनादतिरिक्तस्योत्तरे सम्पावनमेके १६ तं निकामयमानोऽभ्यति-रिच्येत इति श्रुतेः १७ तृतीयसवनाच्चेद्धारियोजनेऽवनीयहोमः १८ अस्मृतावृजीषमिश्रस्याप्स्ववहरणम् १९ दीक्षितश्चेदुपतप्येतोप्यानां येने-च्छेत्तेन चिकित्सेत् २० आग्नीध्रमेनं नयतेति ब्रूयात् कृतं चेत् २१ अकृतेऽप्यविशेषात् २२ तद्देशे वासः २३ वासतीवरमुदकमाचामेदित्येके चात्वालगताभ्यः २४ आपःप्रजापतिर्यज्ञो यज्ञस्य भेषजमसीति २५ अनुसवनमेनमालभेरन्वसव एतद्वः प्रातःसवनं तद्र क्षध्वं तद्गोपायध्वं तद्वो मा व्यवच्छैत्सीदिति २६ रुद्रा आदित्या इत्युत्तरयोः सवनयोः २७ म्रियेत चेन्निर्मन्थ्येन दग्ध्वा शामित्राद्वास्थीन्युपनह्य नेदिष्ठिनमुपदीक्ष्य तेन सह यजेरन् २८ सत्त्रगणयज्ञे सहत्वशब्दात् २९ एकयज्ञे दर्शपूर्णमासवत् ३० एतत्कृत्वा राजानमभिषुत्यागृहीत्वा ग्रहान् दक्षिणपूर्वस्यां वेदिस्रक्त्यां यामेन स्तुवीरन् ३१ तिसृषु पराक्षु सार्पराज्ञीषु ३२ मार्जालीये वा ३३ स्तुते मार्जालीयं त्रिः परियन्त्यपसव्यं सव्योरूनाघ्नाना स्तोत्रिया जपन्तः ३४ अग्न आयूंषि पवस इति प्रतिपद्धवति ३५

संवत्सरेऽस्थीनि याजयेयुः ३६ कर्मापवर्गादसम्भवान्मरणस्य ३७ अपरिमितस्तोमेन यजेरन् ३८ त्रिवृद्बहिष्पवमानेन वा ३९ सप्तदशमन्यत् ४० मैत्रावरुणाग्रान् ग्रहान् गृह्णीयात् ४१ प्रातिनिधिको याजमानं कुर्यात् ४२ दीक्षणीयापुरुष-संस्काराशीर्वर्जम् ४३ समाप्तेऽस्थीनि सपात्राण्यरण्ये निवपेयुः ४४ पुन-र्दाहो वा युक्तत्वात्पात्राणाम् ४५ ततः संचयनादि ४६ १३ 25.13

उखां चेद्विभ्रन्म्रियेत सोपकरणमाहिताग्न्यावृता दग्ध्वा नेदिष्ठ्यग्निं चित्वा तमस्मा अनुदिशेदित्येके १ न कर्मफलासम्भवात् २ उपदीक्षी स्वेष्वग्निषु नखनिकृन्तनाद्युद्वादनान्तं सान्निपातिकम् ३ तेषूपहवमिष्ट्वाग्नी संसृजेत ४ अनाहिताग्निश्चेत्तेष्वेवेत्येके वैश्वानरं निर्वपेत् यस्याग्निभिरन्यं याजयेयुरिति वचनात् ५ नाश्रुतेः ६ आपदि वैश्वानरः ७ समानजनपदसंसवे महारात्रे प्रातरनुवाकमुपाकृत्य पूर्वः पूर्वः कर्म प्रवर्तयेत् ८ सुसमिद्धहोमः ९ संस्थोत्तरं च कुर्यात् १० इच्छन्वृषण्वती प्रतिपत् ११ अनुसवनं वा १२ बृहद्र थन्तरपृष्ठः १३ तौरश्रवसे माध्यन्दिने पवमाने तदावपनश्रुतेः १४ आभीकमभिनीधनमाभीशवानि चैके १५ प्रातःसवने जुहोति संवेशायो-पवेशाय गायत्र्! यै छन्दसेऽभिभूत्यै स्वाहेति १६ त्रिष्टुभे जगत्या इत्युत्तरयोः सवनयोः १७ विहवीय सजनीय कयाशुभीयानि होता शंसति १८ सारव्यमरणमिच्छन्तः प्राजापत्यर्चा जुहुयुः १९ प्रातः सवनेऽध्वर्यु-र्माध्यन्दिने होतोद्गाता तृतीयसवने २० अनुसवनं ब्रह्मा गृहपतिश्च जुहुतः २१ सर्वमरणमिच्छन्तः सर्वेऽनुसवनम् २२ नद्यन्तरेऽसंसवो गिरिभिच्चेत् २३ गिरौ २४ रथाह्ने च २५ सर्वत्राऽविद्विषाणानाम् २६ विद्वेषेऽप्ययं वायुर्महान्त्समुद्र इति श्रुतेः २७ सोमदाहे यथास्वं वृत्तान्तान्धारयेयुः २८ प्रतिनिधाय यथापूर्वं यज्ञेन चरेयुः २९ पञ्च गा दत्त्वा प्राग्द्वादश्याः पुनर्यज्ञः ३० तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्त्स्यात्सत्त्रेऽप्यविशेषात् ३१ दानं प्रायश्चित्तसंयोगात् ३२ न वाऽदक्षिणात्वात् ३३ तस्य त्वह्नः पुनराहारः ३४ ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि ३५ ब्रह्मा विलिष्टं सन्दधातिति श्रुतेः ३६ त्रिवेदसंयोगाच्च ३७ १४ 25.14

दीक्षासु महावीरान्त्सम्भरति १ अन्तःपात्यदेशे सम्भारान्निदधाति २ मृदं वल्मीकवपां वराहविहतं पूतीकानजापयो गवेधुकाः कृष्णाजिनमभ्रिं चोत्तरतः ३ देवस्य त्वेत्यभ्रिमादायौदुम्बरीं वैकङ्कतीं वाऽरत्निमात्रीं सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति ४ मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति ५ कृष्णाजिने निदधात्युत्तरतः ६ देव्यो वम्र्य इति वल्मीकवपाम् ७ इयत्यग्र इति वराहविहतम् ८ इन्द्रस्यौजस्येति पूतीकान् ९ मखायेति पयः १० तूष्णीं गवेधुकाः ११ सम्भृतानभिमृशति मखायेति १२ कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति १३ परिवृते निदधाति सम्भारानुद्घतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति १४ सम्भारैः संसृजाति मखायेति १५ मृदमादाय मखायेति महावीरं करोति प्रादेशमात्रमूर्द्ध्वमासेचनवन्तं मेखलावन्तं मध्यसंगृहीतमूर्द्ध्वं मेखलायास्त्र्! यङ्गुलम् १६ निष्ठितमभिमृशति मखस्य शिर इति १७ आदानमेके १८ एवमितरौ प्रतिमन्त्रम् १९ स्रुक्पुष्कराकृती पिन्वने रौहिणकपाले परिमण्डले मृदमुपशयान्निदधाति २० गवेधुकाभिः श्ल-क्ष्णयति मखायेति प्रतिमन्त्रम् २१ अश्वशकृता धूपयत्यश्वस्य त्वेति प्रतिमन्त्रम् २२ उखावदग्निः प्रदहनं च मखायेति प्रतिमन्त्रम् २३ पक्वानुद्घरत्यृजवे त्वेति प्रतिमन्त्रम् २४ अजापयसावसिंचति मखायेति प्रतिमन्त्रम् २५ तूष्णीं पिन्वनादीनां करणाभिमर्शनश्लक्ष्णनधूपनप्रदहनो-द्घरणावसेचनानि २६ १ 26.1

उपसदा चरिष्यंश्चरिष्यन्प्रवर्ग्येण चरति सप्रवर्ग्ये १ अपिहितद्वारे प्र-वर्ग्यचरणम् २ पत्न्यदर्शनम् ३ अननूक्तिभिश्च ४ यावदुक्तम् ५ परिघर्म्य-मौदुम्बरम् ६ मौञ्जं त्रिवृद्र ज्जव्यम् ७ बाल्वजं विवानमासन्द्यौदुम्बर्यास्कन्धमात्र्याः ८ पूर्वेण गार्हपत्यं प्राचः कुशानास्तीर्य्य पात्रासादनं द्वन्द्वम् ९ उपयमनीं महावीरं परीशासौ पिन्वने रौहिणकपालौ रौहि-णहवन्यौ च स्रुचावनुत्कीर्णे स्थूणामयूखं घृष्टी शतमाने मुंजप्रलवान्वि-कङ्कतशकलान्विंशतिं प्रादेशमात्रान् स्रुवं मुंजवेदं धवित्राणि परिधींश्च रज्जुसन्दानमासन्दीं कृष्णाजिनमभ्रिं सिकताः खरार्था अर्थवच्च १० प्रोक्षणीः संस्कृत्योद्यम्योत्थायाह ब्रह्मन्प्रचारिष्यामो होतरभिष्टुहि प्रस्तोतः सामानि गायेति ११ ब्रह्मानुज्ञातो यमाय त्वेति महावीरं प्रोक्षति १२ प्रतिमन्त्रं वा वाक्यभेदात् १३ परिधर्म्यं च तूष्णीम् १४ पूर्वया द्वारा स्थूणामयूखं निर्हृत्य दक्षिणतो निखनति होतुः सन्दर्शने १५ गार्हपत्याहवनीया उत्तरेण खरौ निवपति । दक्षिणतोऽनुभित्त्युच्छिष्टखरम् १६ पूर्वेणाहवनीयं सम्राडासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयति राजासन्द्या उत्तरतः । कृष्णाजिनमस्यामास्तृणाति । तस्मिन्नभ्युपशये निदधाति । महावीरौ चावच्छादयेद्वा १७ अन्यो वा परिघर्म्ययोजनमध्वर्योः कालसम्पत्तेः १८ अंजन्तीत्युच्यमाने देवस्त्वेत्यनक्ति महावीरमाज्यं संस्कृत्य १९ रजतशतमानं खर उपगूहति पृथिव्याः संस्पृश इति २० २ 26.2

शुक्रं गायेति प्रेष्यति १ पत्नी शिरः प्रोर्णुते २ संसीदस्वेत्युच्यमाने मुंज-प्रलवान् द्विगुणानादीप्य प्रतिदिशं खरे करोति ३ तेषु महावीरमाज्य-वन्तमर्चिरसीति ४ अनाधृष्टेति वाचयति प्रादेशमध्यधिधारयन्तम् ५ प्रतिदिशमेके ६ विश्वाभ्यो मेति दक्षिणत उत्तानं पाणिं निदधाति ७ मनोरश्वेति प्रादेशमुत्तरतः ८ धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च विकङ्कत-शकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरिति ९ अधिकं दक्षिणतो द्वौ मन्त्रेण सुवर्णशतमाने वापिदधाति दिवः संस्पृश इति १० ३ 26.3

चन्द्रङ्गायेति च प्रेष्यति १ कृष्णाजिनावकृत्तैर्द्वविन्त्रैरुपवाजयति त्रिभि-र्दण्डवद्भिर्मधुमध्विति २ एकं प्रयच्छति प्रतिप्रस्थात्रेऽपरमग्नीधे धून्व-न्तस्त्रिस्त्रिः परिक्रामन्ति पितृवद्देववच्च ३ रुचिते वोत्तरम् ४ अर्चिषि प्राप्ते सुवर्णशतमानं निधायाज्येन महावीरं परिषिंचति स्रुवेण प्रतिप्रणवम् ५ रौहिणावधिश्रयति तूष्णीं ग्रामपिष्टानाम् ६ आज्यधर्माः स्थानापत्तः ७ औषधधर्मा वा संस्कारशब्दात् ८ इडे द्यावापृथिवी इत्युच्यमाने परि-धीन्परिधाय रौहिणौ उद्वास्य स्रुचोरासादयत्याहवनीयाद्दक्षिणोत्तरौ ९ अप्नस्वतीमित्युच्यमाने रुचितो घर्म इत्याहोपोत्तिष्ठन्घर्मस्य तन्वौ गायेति प्रेष्यति १० परिक्रम्योपोत्तिष्ठन्तेऽकृन्तं चेद्गर्भो देवानामिति ११ अपोर्णौति पत्नी शिरः १२ त्वष्टृमन्त इत्येनां वाचयति महावीरमीक्षमाणाम् १३ अहः केतुनेति दक्षिणं रौहिणं जुहोति मन्त्रक्रमेणोत्तरम् रात्रिरिति सायम् १४ ४ 26.4

देवस्य त्वेति रज्जुसन्दानमादायेड एहीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन् १ धेनुं गायेति प्रेष्यति २ अदित्यै रास्नेति गां पाशेन प्रतिमुच्य स्थूणायां बध्वा पूषासीति वत्समुत्सृजति ३ सन्दाय घर्माय दीष्वेति वत्समुन्नयति ४ अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि ५ स्वाहेन्द्र वदिति विप्रुषोऽभिमन्त्रयते ६ यस्ते स्तन इति स्तनमालभते ७ एवं प्रतिप्रस्थाताऽजां मयूखे तूष्णीम् ८ पयो गायेति प्रेष्यति ९ उत्तिष्ठ ब्रह्मणस्पत इत्युच्यमाने उपोत्तिष्ठति १० उपद्रव पयसेत्युच्यमाने गच्छत्युर्वन्तरिक्षमिति ११ परीशासावदत्ते गायत्रम् छन्दोऽसीति प्रतिमन्त्रम् १२ वशिष्ठशफौ गायेति प्रेष्यति १३ ताभ्यां महावीरं प्रतिगृह्णाति द्यावा-पृथिवीभ्यां त्वा परिगृह्णामीति १४ उद्यम्य मुंजवेदेनोपमृज्योपय-मन्योपगृह्णात्यन्तरिक्षेणोपयच्छामीति १५ अजापयसावसिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति १६ प्रैतु ब्रह्मणस्पतिरिप्युच्यमाने समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम् १७ ५ 26.5

स्वाहा घर्मायेत्युपयमन्यासिंचति घर्मे १ स्वाहा घर्मः पित्र इति जपित्वातिक्रम्याश्राव्याह घर्मस्य यजेति २ वषट्कृते जुहोति विश्वा आशा इति ३ दिवि धां इति त्रिरुत्कम्पयति ४ स्वाहाग्नय इत्यनुवषट्कृते ५ अश्विना घर्ममिति ब्रह्मानुमन्त्रयते ६ अपातामिति यजमानः ७ इषे पिन्वस्वेति पिन्वमानममुमन्त्रयते ८ घर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम् ९ अमेन्यस्मे इति खरे करोति १० विकङ्कतशकलैर्जुहोति घर्मे न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम् ११ हुत्वा हुत्वा प्रथमपरिधा उपश्रयति १२ चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति १३ सप्तमं च सर्वलेपाक्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति १४ तं स उत्तरतः शालाया उदंचं निरस्यति १५ स्वाहा सं ज्योतिषेत्युपयमन्यामासिंचति घर्म्यम् १६ रौहिणं जुहोति १७ उपश्रितानि च प्रहरति १८ अग्निहोत्रावृता हुत्वा वाजिनवद्भक्षयन्ति मधु हुतमिति १९ उच्छिष्टखरे प्रक्षाल्योपयमनीं निदधाति अत्र वोपश्रितप्रहरणं संसाद्यमानायानुवाचयति २० संसाद्य-मानेभ्य इत्येके २१ सूयवसाद्भगवतीत्युच्यमाने यवसोदके धेनवे प्रय-च्छन्त्येके २२ सर्वमासन्द्यां करोति २३ अभीममिति महावीरम् २४ सकृदासादनप्रोक्षणे खरस्थूणामयूखकृष्णाजिनाभ्र्युपशयासन्दीनाम् २५ आवृत्तिर्वा प्रधानकालत्वात् २६ ६ 26.6

उपसदन्ते प्रवर्ग्योत्सादनम् १ अन्तःपात्ये परिघर्म्य निधाय दक्षिणेन निर्हृत्योच्छिष्टखरम् २ आहवनीये त्रींच्छालाकान् प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रि यवत्प्रतिलोमं प्रमाणेषु । चतुर्गृहीतेनाभिजुहोति या ते घर्म दिव्या शुगिति प्रतिमन्त्रम् ३ प्रास्य तृतीयमुपविश्य ४ क्षत्रस्य त्वेति निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय ५ साम प्रेष्यत्यवमृथवद्देशाः ६ निधनं च ७ उत्सादनदेशं गच्छन्त्यनग्ना उत्तरवेदिम् ८ त्रिः परिषिच्या-चिक्रददिति ९ मन्त्रक्रमेण वा १० नाभिस्पृशं प्रवृंजनीयं निदधाति चतुः-सूक्तिरिति ११ प्रांचावितरौ १२ उपशयां च तूष्णीम् १३ परीशासावभितः १४ रौहिणहवन्यौ चावकृष्टे बाह्ये १५ अभ्रिमुत्तरत आसन्दीं दक्षिणतः कृष्णाजिनमुत्तरतः सर्वतो धवित्राणि परिधींश्च रज्जुसन्दानं वेदमुपयम-न्यामाधाय पश्चात् १६ पश्चात्पिन्वने चाभितो दण्डम् १७ स्थूणामयूखंपश्चात् १८ रौहिणकपाले च १९-२० मध्येऽन्यत् २१ खरा उत्तरतः । दक्षिणतो मार्जालीयदेशं बहिर्वेद्युच्छिष्टखरम् २२ आसेचनवन्ति पयसः पूरयति घर्मैतत्त इति २३ शेषं व्रतमिश्रं दीक्षिताय प्रयच्छति २४ प्रत्तं चेत्केवलम् २५ अत्र वा परिषेचनम् २६ वार्षाहरेष्टाहोत्रीये सामनी गायेति प्रेष्यति २७ चात्वाले मार्जयन्ते सपत्नीका सुमित्रिया न इति । उद्वयमित्युक्राम-त्युत्तरपूर्वार्धमनपेक्षमेत्यैधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति स-मिदसीति पत्नी च गार्हपत्ये तूष्णीम् प्रवृञ्जनीयौ शतमानौ ब्रह्मणे ददाति २८ घर्मदुघामध्वर्यवे । यजमानव्रतदुघां होत्रे । पत्न्या उद्गात्रेऽग्नीधेऽजाम् २१ घर्मभेदे यथोक्तम् ३० उखावच्चान्यं कुर्यात् ३१ अभिन्नेन चरेत् ३२ स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति पूर्णाहुतिमाद्यामुत्तमां च मनसः काममाकूतिमिति ३३ प्रजापतिः संभ्रियमाण इति च यथाकालम् ३४ सविता प्रथमेऽहन्निति च प्रत्यहम् ३५ अवकाश्यस्य प्रवृञ्जयात् ३६ न प्रथमयज्ञे ३७ यावती द्यावापृथिवी इति दधिघर्मग्रहणं मयि त्यदिति भक्षणम् ३८ त्विषः संवृगिति महाव्रतीये ३९ चात्वाले मार्जनम् ४० शान्तिकरणमाद्यन्तयोः । स्वाध्यायदर्शनात् ४१-४२ 26.7

इति कात्यायनश्रौतसूत्रम्